# NĀṬYAŚĀSTRA

## OF

## BHARATAMUNI

WITH THE COMMENTARY ABHINAVABHĀRATĪ

BY

**ABHINAVAGUPTĀCĀRYA**

**VOLUME-II**





# NATYASASTRA OF BHARATA

With

ABHINAVABHARATI

OF

ABHINAVAGUPTACARYA

VOL. II

CHAPTERS - 8 - 18

Price 100.00

Parimal Sanskrit Series No.-4

# NĀṬYAŚĀSTRA

OF

# BHARATAMUNI

WITH THE COMMENTARY ABHINAVABHĀRATĪ

*By*

ABHINAVAGUPTACHARYA

VOL. II.

CHAPTERS. 8-18

*General Editor*

**Dr. R. S. NAGAR**

*Edited by*

K. L. JOSHI

M.A. Vedalankar

**Parimal Publications**

DELHI — AHMEDABAD

*Published by* :
PARIMAL PUBLICATIONS
33/17 Shakti Nagar
Delhi-110007
(2)
7-B Jyotipark Society
Shah Alam
Ahmedabad-380008



First Edition 1984
Price : Rs. 100.00

*Printed at* :
Laxmi Composing Agency
20-D/4 Main Road, Baburpur
Shahdara, Delhi-110032

भरतमुनिप्रणीतं

# नाट्यशास्त्रम्

श्रीमदभिनवगुप्ताचार्यविरचितया अभिनवभारती—
संस्कृतव्याख्यया समुद्भासितम्

द्वितीयो भागः

अध्यायाः ८–




प्रधानसम्पादक :
डा० रविशंकर नागर
संस्कृत विभाग, दिल्ली विश्वविद्यालय

सम्पादक :
कन्हैयालाल जोशी
एम० ए० वेदालंकार

परिमल पब्लिकेशन्स
दिल्ली—अहमदाबाद

# विषय सूची

## अष्टमेऽध्याये अङ्गाभिनयः

## नवमेऽध्याये उपाङ्गाभिनयः

## दशमेऽध्याये-चारीविधानम्

भौम्यः



आकाशिक्यः

## एकादशेऽध्याये मण्डलविकल्पनम्

## द्वादशेऽध्याये गतिप्रचारः

आसनविधि:

## त्रयोदशेऽध्याये कक्ष्याविभागविधानम्

प्रवृत्तयः



## चतुर्दशेऽध्याये वागभिनये छन्दोविधानम्

## पञ्चदशेऽध्याये वागभिनये-वृत्तलक्षणम्

षोडशेऽध्याये लक्षणालंकाराः

लक्षणानि

## सप्तदशेऽध्याये भाषालक्षणं तन्नियमलक्षणं काकुस्वरूपञ्च

## अष्टादशोऽध्यायेदशरूपलक्षणम्

॥ श्री: ॥

# नाट्यशास्त्रम्

## अष्टमोऽध्याय:

ऋषय ऊचु: ।

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुन: ॥ १ ॥
नाट्ये कतिविध: कार्य: तज्ज्ञैरभिनयक्रम: ।
कथं वाभिनयो[1] ह्येष कतिभेदस्तु कीर्तित: ॥ २ ॥
सर्वमेतद्यथातत्त्वं कथयस्व महामुने[2] ।
यो यथाभिनयो यस्मिन् योक्तव्य: सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनि: ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान् प्रति ॥ ४ ॥
अहं व: कथयिष्यामि निखिलेन तपोधना: ।
यस्मादभिनयो ह्येष विधिवत् समुदाहृत: ॥ ५ ॥

यदुक्तं चत्वारोऽभिनया इति तान् वर्णयिष्याम: । अत्राह—अभिनय इति कस्मात्, अत्रोच्यते—अभीत्युपसर्ग: णीञ् इति प्रापणार्थको धातु: । अस्याभिनीत्येवं व्यवस्थितस्य एरजित्यच्प्रत्ययान्तस्याभिनय इत्येवं रूपं सिद्धम् । एतच्च धात्वर्थानुवचनेनावधार्यं[3] भवति ।

### अत्र श्लोकौ

अभिपूर्वस्तु णीञ् धातुराभिमुख्यार्थनिर्णये ।
यस्मात्पदार्थान्नयति तस्मादभिनय: स्मृत: ॥ ६ ॥
विभावयति यस्माच्च नानार्थान् हि प्रयोगत: ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनय: स्मृत: ॥ ७ ॥
चतुर्विधश्चैव भवेन्नाट्यस्माभिनयो द्विजा: ।
अनेकभेदवाहुल्यं नाट्यं ह्यस्मिन् प्रतिष्ठितम् ॥ ८ ॥
आङ्गिको वाचिकश्चैव ह्याहार्य:[4] सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्रा: चतुर्धा परिकल्पित: ॥ ९ ॥

---

१. NS चाभिनेयो । GOS. KS. वाभि० ।
२. KSS. भगवन् वक्तुमर्हसि । NS., GOS., same as above.
३. GOS. धात्वर्थवचनेनावधार्यम् ।
४. KSS. आहार्य: ।

सात्त्विकः पूर्वमुक्तस्तु भावैश्च[1] सहितो मया।
अङ्गाभिनयमेवादौ गदतो मे निबोधत ॥ १० ॥

त्रिविधस्त्वाङ्गिको ज्ञेयः[2] शारीरो मुखजस्तथा।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ ११ ॥

शिरोहस्तकटीवक्षः पार्श्वपादसमन्वितः।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः ॥ १२ ॥

तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि।
नेत्रभ्रूनासाधरकपोलचिवुकान्युपाङ्गानि ॥ १३ ॥

अस्य[3] शाखा च नृत्तं च तथैवाङ्कुर एव च।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ १४ ॥

आङ्गिकस्तु भवेच्छाखा ह्यङ्कुरः[4] सूचना भवेत्।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥ १५ ॥

मुखजेऽभिनये विप्रा! नानाभावरसाश्रये[5]।
शिरसः प्रथमं कर्म गदतो मे निबोधत ॥ १६ ॥

आकम्पितं कम्पितं च धूतं विधुतमेव च।
परिवाहितमाधूत[6]मवधूतं तथाञ्चितम् ॥ १७ ॥

निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम्।
लोलितं चैव[7] विज्ञेयं त्रयोदशविधं शिरः ॥ १८ ॥

शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत्।
द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥ १९ ॥

ऋजुस्थितस्य चोर्ध्वाधः क्षेपादाकम्पितं भवेत्।
बहुशश्चलितं यच्च तत्कम्पितमिहोच्यते ॥ २० ॥

संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा।
[8]निर्देशा वाहने चैव भवेदाकम्पितं शिरः ॥ २१ ॥

---

१. KSS. तु।
२. KSS. दृष्टः।
३. KSS. तस्य।
४. KSS. अंकुरः।
५. KSS. समाश्रये GOS. NS. रसाश्रये।
६. KSS. हितोद्वाहितक। GOS., NS. Same as above.
७. KSS. चैव NS, GOS. चेति।
८. KSS. निर्देशे NS., GOS. निर्देशा।

रोषे वितर्के विज्ञाने प्रतिज्ञानेऽथ[1] तर्जने ।
[2]प्रश्नातिशयवाक्येषु शिरः कम्पितमिष्यते ।। २२ ।।
शिरसो रेचनं यत्तु शनैस्तद् धुतमिष्यते[3] ।
द्रुतमारेचनादेतद्विधुतं तु भवेच्छिरः ।। २३ ।।
अनीप्सिते विषादे च विस्मये प्रत्ययं तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ।। २४ ।।
शीतग्रस्ते भयार्त्ते च[4] त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं तु भवेच्छिरः ।। २५ ।।
[5]पर्यायशः पार्श्वगतं शिरः स्यात् परिवाहितम् ।
[6]आधूतमुच्यते तिर्यक् सकृदुद्वाहितं तु यत् ।। २६ ।।
साधने विस्मये हर्षे स्मिते[7] चामर्षिते[8] तथा ।
विचारे विहृते[9] चैव लीलायां परिवाहितम् ।। २७ ।।
[10]गर्वेच्छादर्शने चैव[11] पार्श्वस्थोर्ध्वानिरीक्षणे ।
[12]आधूतं तु शिरो ज्ञेयमात्मसम्भावनादिषु ।। २८ ।।
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
सन्देशावाहनालापसंज्ञादिषु .नदिष्यते ।। २९ ।।
किञ्चित् [13]पार्श्वनतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मत्ते चिन्तायां [14]हनुधारणं ।।३० ।।

१. KSS. प्रतिज्ञातेऽथ NS. प्रतिज्ञाने च GOS. Same as above.
२ NS. पृच्छाति KSS. व्याध्यमर्षणयोश्चैव ।
३. NS. उच्यते ।
४. KSS. तु GOS, NS. च ।
५. KSS पर्यायतः ।
६. KSS. सकृदुद्वाहितमिति स्मृतम् । NS., GOS Same as above.
७. KSS. स्थिते । NS., GOS. स्मृते ।
८. NS. वामर्षिते KSS. GOS. चामर्षिते ।
९. NS. निह्नुते KSS, GOS. विहृते ।
१० NS. गर्वात्मदर्शने । KSS., GOS गर्वेच्छा ।
११. तथा चोर्ध्वं NS, GOS Same as above.
१२. KSS उद्वाहितं तु कर्त्तव्यं ।
१३ KSS., NS. पार्श्वा ।
१४. KSS. सचिन्ते दुःखिते भवेत् । NS, GOS. Same as above,

[1]उत्क्षिप्तांसावसक्तं यत्कुञ्चितभ्रूलतं शिरः ।
निहञ्चितं[2] तु विज्ञेयं स्त्रीणामेतत् प्रयोजयेत् ।। ३१ ।
गर्वे[3] माने विलासे च बिब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते[4] स्तम्भमाने निहञ्चितम् ।। ३२ ।।
परावृत्तानुकरणात्[5] परावृत्तमिहोच्यते ।
तत् स्यान्मुखापहरणे पृष्ठतः प्रेक्षणादिषु ।। ३३ ।।
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः ।
प्रांशुदिव्यास्त्र[6]योगेषु स्यादुत्क्षिप्तं प्रयोगतः ।। ३४ ।।
[7]अधोमुखं स्थितं चापि बुधाः प्राहुरधोगतम् ।
लज्जायां च प्रणामे च दुःखे चाधोगतं [8]शिर ।। ३५ ।।
सर्वतो[9] भ्रमणाच्चैव शिरः स्यात् परिलोलितम् ।
मूर्च्छाव्याधिमदावेश[10]ग्रहानिद्रादिषु स्मृतम् ।। ।। ३६ ।।
ऋजुस्वभावसंस्थानं प्राकृतं तु स्वभावजम् ।
मंगलयाध्ययनध्यानस्वभावजयकर्मसु ।। ३७ ।।
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रिताः[11] ।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ।। ३८ ।।
त्रयोदशविधं ह्येतच्छिरःकर्म मयोदितम् ।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ।। ३९ ।।
कान्ता भयानका हास्या करुणा चाद्भुता तथा ।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ।। ४० ।।

---

१. KSS. उत्क्षिप्तबाहुशिरसस्तथाऽञ्चिताशिरोधरः NS. बाहुशिंखर ।
२. NS. शिरो ज्ञेयं । KSS., GOS. तु विज्ञेयं ।
३. NS. नार्वे विलासे ललिते KSS., GOS., MG. Same as above.
४. NS., GOS. स्तम्भे माने ।
५. KSS, NS. परावृत्तं शिरः स्मृतम् GOS. Same as above.
६. KSS. दिव्याश्र NS., GOS. दिव्यार्थे ।
७. NS. अधोमुखस्थितं चापि शिरः प्राहुरधोमुखम KSS. अधोमुखं स्थितं रधोगतम् GOS. Same as above,
८. KSS., NS. भवेत् GOS. शिरः ।
९ KSS., NS. सर्वतो लोलनाच्चापि शिरः स्यात्परिलोलितम् GOS. Same as above.
१०. KSS. मदावेगगृह GOS., NS. मदावेशग्रह ।
११. संश्रिताः GOS, NSS. संश्रया ।

स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ४१ ॥

शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा ।
ग्लाना च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४२ ॥

कुञ्चिता चाभितप्ता च जिह्मा सललिता तथा ।
वितर्किता र्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४३ ॥

आकेकरा विकोशा च [1]त्रस्ता च मदिरा तथा ।
षट्त्रिंशद् दृष्टयो ह्येता तासु नाट्यं प्रतिष्ठितम्[2] ॥४४ ॥

अस्य दृष्टिविधानस्य नानाभावरसाश्रयम्[3] ।
लक्षणं सम्प्रवक्ष्यामि यथाकर्म प्रयोगतः ॥ ४५ ॥

हर्षप्रसादजनिता कान्तात्यर्थं [4]समन्यथा ।
सभ्रूक्षेपकटाक्षा च शृंङ्गारे दृष्टिरिष्यते ॥ ४६ ॥

प्रोद्वृत्तनिष्टब्धपुटा [5]स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥ ४७ ॥

क्रमादाकुञ्चितपुटा [6]विभ्रान्ताकुलतारका ।
हास्या दृष्टिस्तु कर्त्तव्या कुहकाभिनयं प्रति ॥ ४८ ॥

पतितोर्ध्वपुटा साश्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४९ ॥

या [7]त्वाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥ ५० ॥

क्रूरा [8]रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
भ्रुकुटीकुटिला दृष्टिः रौद्रे रौद्री रसा स्मृता ॥ ५१ ॥

---

१. KSS. त्रस्ताऽथ ।

२. KSS., NS. नामतोऽभिहिता मया ।

३. NS. रसाश्रितम् KSS. GOS. रसाश्रयम् ।

४. KSS., NS. समन्मथा GOS. समन्यथा ।

५. KSS. प्रस्फुरद्वृत्त ।

६. KSS. सविभ्रान्ता ।

७. NS. चाकुञ्चित ।

८. NS. रुणोद्वृत्त KSS. रुणावृत्ता GOS. रुणोद्वृत्ता

दीप्ता विकसिता क्षुब्धा गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ५२ ॥
निकुञ्चितपुटापाङ्गा [1]घूर्णोपप्लुततारका ।
संश्लिष्टस्थिरपक्ष्मा[2] च वीभत्सा दृष्टिरिष्यते ॥ ५३ ॥
[3]नासाग्रसक्ता निमिषा तथाधोभागचारिणी ।
आकेकरपुटा शान्ते शान्ता दृष्टिर्भवेदसौ ॥ ५४ ॥
रसजा दृष्टो ह्येता विज्ञेया लक्षणान्विता ।
अतः परं प्रवक्ष्यामि स्थायिभावसमाश्रयाः ॥ ५५ ॥
व्याकोशमध्या मधुरा [4]स्थिततारभिलाषिणी ।
सानन्दाश्रुप्लुता दृष्टिः स्निग्धेयं रतिभावजा ॥ ५६ ॥
चला हसितगर्भा च [5]विशत्तारानिमेषिणी ।
किञ्चिदाकुञ्चिता दृष्टिः हृष्टा हासे प्रकीर्तिता ॥ ५७ ॥
अवस्रस्तोत्तरपुटा[6] किञ्चित्संरब्धतारका ।
मन्दसञ्चारिणी दीना सा शोके दृष्टिरिष्यते ॥ ५८ ॥
रूक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधे विधीयते[7] ॥ ५९ ॥
संस्थिते तारके यस्याः स्थिता विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसम्भवा ॥ ६० ॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ६१ ॥
संकोचितपुटाध्यामा[8] दृष्टिर्मीलिततारका ।
पक्ष्मोद्देशात् समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥ ६२ ॥

---

१. NS, KSS. घूणोपप्लुत ।
२. KSS संश्लिष्टस्मितपक्षा NS., GOS., Same as above.
३. KSS. does not read this verse.
४. KS. स्मरारा KSS. स्मरतारा GOS. Same
५. KS. विशत्ताराभिलाषिणी KSS, GOS. Same as above.
६. KS. इषत्स्रस्तोत्तरपुरा NS. अर्धस्रस्तोत्तर GOS. अवस्रस्तोत्तर .
७. GOS, KSS. Same as above. NS. क्रोधेऽभिधीयते ।
८ NS, KSS. संकोचिनपुटन्यासा ।

भृशमुद्वृत्ततारा च नष्टोभयपुटान्विता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥ ६३ ॥

स्थायिभावाश्रया ह्येता [1]विज्ञेयाः दृष्टयो बुधैः ।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम् ॥ ६४ ॥

समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थाग्राहिणी ध्यामा[2] शून्या दृष्टिः प्रकीर्तिता ॥ ६५ ॥

[3]प्रस्पन्दमानपक्ष्माग्रा नात्यर्थमुकुलैः पुटैः ।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका[4] ॥ ६६ ॥

श्रमप्रम्लापितपुटा क्षामा कुञ्चितलोचना ।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥ ६७ ॥

किञ्चिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया ।
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा ॥ ६८ ॥

[5]ग्लानभ्रुपुटपक्ष्मा या शिथिला मन्दचारिणी ।
[6]क्रमप्रवृष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥ ६९ ॥

किञ्चिच्चला स्थिरा किञ्चदुद्गता[7] तिर्यगायता[8] ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥ ७० ॥

विषादविस्तीर्णपुटा पर्यस्तान्ता निमेषिणी ।
किञ्चिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥७१ ॥

स्फुरदाश्लिष्टपक्ष्माग्रा[9] मुकुलोर्ध्वपुटाञ्चिता ।
[10]सुखोन्मीलिततारा च मुकुला दृष्टिरिष्यते[11] ॥७२॥

---

१. NS. दृष्टयो लक्षिता मया KSS. लक्षिता दृष्टयोमया ।
२. NS., KSS. क्षामा ।
३. NS., KSS. प्रस्यन्द ।
४. KSS. GOS. त्रपाधोमुखतारा ।
५. KSS. ग्लान ।
६. KSS. क्लम । NS., GOS. क्रम ।
७. KSS. किञ्चिदुत्तुङ्गा NS. किञ्चिदुन्नता ।
८. KSS. किञ्चिदायता ।
९. KSS. स्फुरिताश्लिष्टपक्ष्मार्धा ।
१०. KSS. सुखी (ख) मीलित ।
११. NS उच्यते ।

आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरिष्यते ॥ ७३ ॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
सन्तापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥ ७४ ॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ् निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७५ ॥
मधुराकुञ्चितान्ता च [1]सभ्रूक्षेपा च सस्मिता ।
समन्मथविकारा च दृष्टिः सा ललिता स्मृता ॥ ७६ ॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
[2]अधोगतविचारा च [3]दृष्टिरेषा वितर्किता ॥ ७७ ॥
अर्धव्याकोशपक्ष्मा[4] च ह्लादार्धमुकुलैः पुटैः ।
स्मितार्धमुकुला दृष्टिः किञ्चिल्लुलिततारका ॥ ७८ ॥
अनवस्थिततारा[5] च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७९ ॥
पुटौ प्रस्फुरितौ यस्य[6] निष्टब्धौ पतितौ पुनः ।
विप्लुतोद्वृत्ततारा च दृष्टिरेषा तु विप्लुता ॥ ८० ॥
आकुञ्चितपुटापाङ्गा सङ्गतार्धनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥ ८१ ॥
विकोशितोभयपुटा प्रोत्फुल्ला चानिमेषिणी ।
अनवस्थितसंचारा[7] विकोशा दृष्टिरुच्यते ॥ ८२ ॥
त्रासोद्वृत्तपुटा या तु तथोत्कम्पिततारका ।
सन्त्रासोत्फुल्लमध्या च त्रस्ता दृष्टिरुदाहृता ॥ ८३ ॥
[8]आघूर्णमानमध्या या क्षामान्ताञ्चितलोचना ।
दृष्टिर्विकसितापाङ्गा मदिरा तरुणे मदे ॥ ८४ ॥

---

१. KSS. सभ्रूक्षेपाऽथ ।
२. GOS. अधोमुखगता ।
३. KSS. दृष्टिरिष्टा ।
४. KSS. तारा ।
५. NS. अनवस्मित ।
६. GOS., KSS. यस्य, NS. यस्या ।
७. GOS. अनवस्थिततारा च ।
८. NS., KSS. व्याघूर्ण ।

किञ्चिदाकुञ्चितपुटा ह्यनवस्थिततारका ।
तथा चलितपक्ष्मा च दृष्टिर्मध्यमदे भवेत् ॥ ८५ ॥
सनिमेषानिमेषा च किञ्चिद् दर्शिततारका ।
अधोभागचरी दृष्टिरधमे तु मदे स्मृता ॥ ८६ ॥
इत्येवं लक्षिता ह्येता षट्त्रिंशद् दृष्टयो मया ।
रसजा [1]सहजाश्चासां विनियोगं निबोधत ॥ ८७ ॥
रसजास्तु रसेष्वेव स्थायिषु स्थायिदृष्टयः ।
[2]शृणुत व्यभिचारिण्यः सञ्चारिषु यथास्थिताः[3] ॥ ८८ ॥
शून्या दृष्टिस्तु चिन्तायां स्तम्भे चापि प्रकीर्तिता ।
निर्वेदे चापि मलिना वैवर्ण्ये च विधीयते ॥ ८९ ॥
श्रान्ता श्रमार्ते[4] स्वेदे च लज्जायां ललिता[5] तथा ।
अपस्मारे तथा व्याधौ ग्लान्यां ग्लाना[6] विधीयते ॥ ९० ॥
शङ्कायां शङ्किता ज्ञेया विषादार्थे विषादिनी ।
निद्रास्वप्नसुखार्थेषु मुकला दृष्टिरिष्यते ॥ ९१ ॥
कुञ्चितासूयितानिष्टदुष्प्रेक्षाक्षिव्यथासु च ।
अभितप्ता च निर्वेदे ह्यभिघाताभितापयोः ॥ ९२ ॥
जिह्मा दृष्टिरसूयायां जडतालस्ययोस्तथा ।
धृतौ हर्षे सललिता स्मृतौ तर्के च तर्किता ॥ ९३ ॥
आह्लादिष्वर्धमुकुला गन्धस्पर्शसुखादिषु ।
विभ्रान्ता दृष्टिरावेगे संभ्रमे विभ्रमे तथा ॥ ९४ ॥
विप्लुता [7]चपलोन्माददुःखार्तिमरणादिषु ।
आकेकरा दुरालोके बिच्छेदप्रेक्षितेषु च ॥ ९५ ॥
विबोधगर्वामर्षौ[8]ग्रचमतिषु स्याद्विकोशिता ।
त्रस्ता त्रासे भवेद दृष्टिर्मदिरा च मदेष्विति ॥ ९६ ॥

---

१. KSS. भावजा ।
२. KSS. शृणुध्वम् ।
३. KSS. यथाहिताः ।
४. KSS. श्रमार्तौ ।
५. KSS. लज्जिता ।
६. KSS., NS. ग्लाने ग्लाना ।
७. NS., KSS. चापली ।
८. KSS विबोधाभावमर्षोत्य ।

षट्त्रिंशद् दृष्टयो ह्येता यथावत् समुदाहृताः[1] ।
रसजानां तु दृष्टीनां भावजानां तथैव च ॥ ९७ ॥

तारापुटभ्रुवां कर्म गदतो मे निबोधत ।
भ्रमणं वलनं पातश्चलनं सम्प्रवेशनम् ॥ ९८ ॥

विवर्तनं समुद्वृत्तं निष्कामः प्राकृतं तथा ।
पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं स्मृतम् ॥ ९९ ॥

वलनं गमनं त्र्यस्त्रं पातनं स्रस्तता तथा ।
चलनं कम्पनं ज्ञेयं प्रवेशोऽन्तःप्रवेशनम् ॥ १०० ॥

विवर्तनं कटाक्षस्तु समुद्वृत्तं समुन्नतिः ।
निष्कामो निर्गमः प्रोक्तः[2] प्राकृतं तु स्वभावजम् ॥ १०१ ॥

[3]अथैषां रसभावेषु विनियोगं निबोधत ।
भ्रमणं चलनोद्वृत्ते निष्कामो वीररौद्रयोः ॥ १०२ ॥

निष्कामणं संवलनं कर्तव्यं तु भयानके ।
हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते ॥ १०३ ॥

पातनं करुणे कार्यं निष्क्रामणमथाद्भुते ।
प्राकृतं शेषभावेषु शृङ्गारे च विधीयतम् ॥ १०४ ॥

स्वभावसिद्धमेवैतत् कर्म लोकक्रियाश्रयम् ।
एवं रसेषु[4] भावेषु ताराकर्माणि योजयेत्[5] ॥ १०५ ॥

[6]अथाऽत्रैव प्रवक्ष्यामि प्रकारान् दर्शनस्य तु ।
समं साच्यनुवृत्ते च [7]ह्यालोकितविलोकिते ॥ १०६ ॥

प्रलोकितोल्लोकिते [8]चाप्यवलोकितमेव च ।
समतारं च सौम्यं च यद्दृष्टं तत् समं स्मृतम् ॥ १०७ ॥

---

१. KSS. प्रतिपादिताः ।
२. GOS. प्राक्तः ।
३. KSS. तथैषां ।
४. KSS. सर्वेषु ।
५. KSS. ताराकर्म नियोजयेत् ।
६. KSS. तथा तत्रैव वक्ष्यामः प्रकारं ।
७. KSS. तु आलोकित ।
८. KSS. चावलोकि NS. चाप्यलोकित ।

पक्ष्मान्तर्गततारं च त्र्यस्रं साचीकृतं[1] तु तत् ।
रूपनिर्वर्णना[2] युक्तमनुवृत्तमिति स्मृतम्[3] ॥ १०८ ॥

सहसा दर्शनं यत् स्यात्तदालोकितमुच्यते ।
विलोकितं पृष्टतस्तु पार्श्वाभ्यां तु प्रलोकितम् ॥ १०९ ॥

ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः ।
इत्येषु दर्शनविधिः सर्वभावरसाश्रयः ॥ ११० ॥

ताराकृतोऽस्यानुगतं पुटकर्म निबोधत ।
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम् ॥ १११ ॥

विर्वातितं स स्फुरितं पिहितं सविताडितम्[4] ।
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः ॥ ११२ ॥

[5]समागमो निमेषः स्यादायामः प्रसृतं भवेत्[6] ।
आकुञ्चितं कुञ्चितं स्यात् समं स्वाभाविकं स्मृतम् ॥ ११३ ॥

विर्वातितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा ।
स्थगितं पिहितं प्रोक्तमाहतं तु विताडितम् ॥ ११४ ॥

अथैषां रसभावेषु विनियोग निबोधत ।
क्रोधे [7]विर्वातितं कार्यो निमेषोन्मेषणैः सह ॥ ११५ ॥

विस्मयार्थेषु हर्षे च वीरे[8] च प्रसृतं स्मृतम् ।
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ॥ ११६ ॥

शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा[9] ।
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनार्तिषु ॥ ११७ ॥

नेत्ररोगे च पिहितमभिघाते विताडितम् ।
इत्येवं रसभावेषु तारकापुटयोर्विधिः ॥ ११८ ॥

---

१. KSS. साचिकृतं ।
२. KSS. रूपनिर्वापणा ।
३. KSS स्फुटम् ।
४. NS., KSS. प्रस्फुरितं पिहितं सवितालितम् ।
५. KSS. समागतो ।
६. KSS. आयामस्तु प्रसारितम् ।
७. KSS. विर्वातितः कार्यः ।
८. KSS. वीर्ये ।
९. KSS. भवेत ।

[1]कार्याऽनुगतमस्यैव भ्रुवोः कर्म निबोधत ।
[2]उत्क्षेपः पातनश्चैव भ्रुकुटी चतुरं भ्रुवोः ॥ ११९ ॥
कुञ्चितं रेचितं चैव सहजं चेति सप्तधा ।
भ्रुवोरुन्नति[3]रुत्क्षेपः सममेकैकशोऽपि वा ॥ १२० ॥
[4]अनेनैव क्रमेणैव पातनं स्यादधोमुखम् ।
भ्रुवोर्मूलसमुत्क्षेपात् भ्रुकुटी परिकीर्तिता ॥ १२१ ॥
चतुरं किञ्चिदुच्छ्वासान्मधुरायतयाभ्रुवोः[5] ।
एकस्या [6]उभयोर्वापि [7]मृदुभङ्गस्तु कुञ्चितम् ॥ १२२ ॥
एकस्या एव ललितादुत्क्षेपाद्रेचितं[8] भ्रुवः ।
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् ॥ १२३ ॥
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ।
कोपे वितर्के हेलायां लीलादौ सहजे तथा ॥ १२४ ॥
श्रवणे दर्शने चैव भ्रुवमेकां समुत्क्षिपेत् ।
[9]उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि ॥ १२५ ॥
[10]आसूयितजुगुप्सायां हास्ये घ्राणे च पातनम् ।
क्रोधस्थानेषु दीप्तेषु योजयेत् भ्रुकुटीं बुधः ॥ १२६ ॥
शृङ्गारे ललिते सौम्ये सुखे स्पर्शे प्रबोधने ।
एवं विधेषु भावेषु चतुरं तु प्रयोजयेत् ॥ १२७ ॥
[11]स्त्रीपुंरुषयोश्च संलापे नानावस्थान्तरात्मके ।
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते ॥ १२८ ॥

---

१. KSS. कार्येऽनुगत ।
२. KSS. उत्क्षेपं ।
३. NS. भ्रुवोरुद्गतिः ।
४. NS. सममेकैकशोप्येव पातनं स्यादधोगतिः । KSS. एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम् । GOS,. Same as above.
५. NS., KSS. मधुरायतयोः ।
६. GOS. हिं द्वयोर्वापि ।
७. KSS., NS. मृदुभङ्गेन ।
८. KSS. रेचिते ।
९. KSS. उत्क्षेपे ।
१०. KSS. NS. ससूयितजुगुप्सायां ।
११. KSS. NS. do not read this verse.

[1]निकुञ्चितं तु कर्तव्यं नृत्ते योज्यं तु रेचितम् ।
अनाविद्धेषु भावेषु विद्यात् स्वाभाविकं बुधः ॥ १२९ ॥
इत्येवं तु भ्रुवः प्रोक्तं नासाकर्म निबोधत ।
नता मन्दा विकृष्टा च सोच्छ्वासा च विकूणिता[2] ॥ १३० ॥
स्वाभाविका[3] चेति बुधैः षड्विधा नासिका स्मृता ।
नता मुहुःश्लिष्टपुटा मन्दा तु निभृता स्मृता ॥१३१॥
विकृष्टोत्फुल्लितपुटा सोच्छ्वासा कृष्टमारुता ।
[4]विकूणिता संकुचिता समा स्वाभाविका स्मृता ॥१३२॥
[5]नासिकालक्षणं ह्येतत् विनियोगं निबोधत ।
मन्दोत्कम्पसमायुक्ते नारीणामनुरोधने ॥१३३॥
निःश्वासे च नता कार्या नासिका नाट्ययोक्तृभिः ।
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ॥१३४॥
निर्वेगौत्सुक्यचिन्तासु मन्दा शोके च योजयेत्[6] ।
[7]तीव्रगन्धे विकृष्टां तौ रौद्रे वीरे तथैव च ॥१३५॥
[8]इष्टघ्राणे तयोच्छ्वासे दीर्घोच्छ्वसां प्रयोजयेत् ॥
[9]विकूणिता च कर्तव्या जुगुप्सायामसूयतादिषु ॥१३६ ॥
[10]कार्या शेषु भावेषु तज्ज्ञैः स्वाभाविका तथा ।
क्षामं फुल्लं च घूर्णं च कम्पितं कुञ्चितं समम् ॥१३७॥
षड्विधं गण्डमुद्दिष्टं तस्य[11] लक्षणमुच्यते ।
क्षामं [12]चावनतं ज्ञेयं फुल्लं विकसितं भवेत् ॥१३८॥

---

१. KSS. विकुञ्चितं ।
२. NS., KSS. विघूर्णिता ।
३. NS. स्वाभाविकी ।
४. NS., KSS. विघूर्णिता ।
५. KSS., NS. read as विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता ।
६. KSS., मन्दा शोके तु कीर्तिता NS. मन्दा शोके प्रकीर्तिताः ।
७. KSS., NS. विकृष्टा तीव्रगन्धोर्ध्वश्वासरोषभयार्तिषु ।
८. KSS., NS. सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ।
९. NS. विघूर्णितोक्ता हास्ये च जुगुप्सायामसूयिते ।
KSS. विघूर्णितो हास्येषु जुगुप्सायामसूयिते ।
१०. KSS., NS. स्वाभाविका शेषभावेष्वित्येवं नासिका स्मृता ।
११. NS, अस्य ।
१२. KSS., NS. त्ववनतं ।

[1]विततं घूर्णमत्रोक्तं कम्पितं स्फुरितं भवेत् ।
स्यात् कुञ्चितं संकुञ्चितं समं प्राकृतमुच्यते ॥१३९॥
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ।
क्षामं दुःखेषु कर्तव्यं प्रहर्षे [2]फुल्लमेव च ॥१४०॥
[3]पूर्णमुत्साहगर्वेषु रोषहर्षेषु कम्पितम् ।
कुञ्चितं च सरोमाञ्चं स्पर्शे[4] शीते भये ज्वरे ॥१४१॥
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ।
[5]विवर्तनं कम्पनं च विसर्गो विनिगूहनम् ॥१४२॥
सन्दष्टकं [6]समुद्गं च षट् कर्माण्यधरस्य तु ।
विकूणितं विवर्तस्तु वेपनं कम्पनं स्मृतम् ॥१४३॥
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ।
[7]सन्दष्टकं द्विजैर्दष्टं समुद्गः सहजोन्नति ॥१४४॥
इत्योष्ठलक्षणं प्रोक्तं विनियोगं निबोधत ।
असूयावेदना[8]वज्ञाभयादिषु विवर्तनम् ॥१४५॥
कम्पनं [9]वेपना शीतभयरोषजवादिषु ह्रास्या ।
स्त्रीणां विलासे विव्वोके विसर्गो रञ्जने तथा[10] ॥१४६॥
विनिगूहनमायासे सन्दष्टं [11]क्रोधकर्मसु ।
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने ॥१४७॥
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ।
कुट्टनं खण्डनं छिन्नं [12]चुक्कितं लेहनं (ग्रहणं) समम् ॥१४८॥

---

१. NS., KSS. उन्नतं पूर्नमत्रोक्तं ।
२. KSS. फुल्लमिष्यते ।
३. KSS., NS. घूर्णमुत्साह ।
४. NS. कम्पे ।
५. KSS. निवर्तने ।
६. NS. समुद्गश्च ।
७. KSS. सन्दष्टको द्विजैर्दष्टः समुद्गः सहिता गतिः । NS. सन्दष्टको द्विजैर्दष्टः समुद्वृत्तं समूद्गकः ।
८. KSS. लज्जावस्यादिषु । NS. लज्जालस्यादिषु ।
९. NS. कोपशीतार्तिभयरोगजयादिषु KSS. वेपनं शीतज्वररोषजयादिषु ।
१०. NS. विसर्गः सुरते स्मृतः KSS. विसर्गे रञ्जने तथा ।
११. KSS. क्रोधकर्माणि ।
१२. NS. चिकितं KSS. चुक्षितं ।

दष्टं च दन्तक्रियया चिबुकं त्विह लक्ष्यते ।
कुट्टनं दन्तसंघर्षः [1]संस्फोटः खण्डनं मुहुः ॥१४९॥
छिन्नं तु गाढसंश्लेषश्चुक्कितं दूरविच्युतिः[2] ।
लेहनं जिह्वया लेहः किञ्चित् श्लेषः[3] समं भवेत् ॥१५०॥
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ।
भयशीतज्वरक्रोधग्रस्तानां कुट्टनं भवेत् ॥१५१॥
जपाध्ययनसंल्लापभक्ष्ययोगे च खण्डनम् ।
छिन्नं व्याधौ भये शीते व्यायामे रुदिते मृते[4] ॥१५२॥
जृम्भणे [5]चुक्कितं कार्यं तथा लेह्ये च लेहनम् ।
समं स्वभावभावेषु सन्दष्टं[6] क्रोधकर्मसु ॥१५३॥
इति दन्तोष्ठजिह्वानां करणाच्चिबुकक्रिया ।
विधुतं [7]विनिवृत्तं च निर्भुग्नं भुग्नमेव च ॥१५४॥
विवृतं च तथोद्वाहि कर्माण्यत्रास्यजानि तु ।
व्यावृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ॥१५५॥
[8]अवाङ्मुखत्वं निर्भुग्नं व्याभुग्नं किञ्चिदायतम् ।
विश्लिष्टोष्ठं च विवृतमुद्वाह्युत्क्षिप्तमेव च ॥१५६॥
विनिवृत्तमसूयायां ईर्ष्याक्रोधकृतेन च ।
अवज्ञा विहृतादौ च स्त्रीणां कार्या प्रयोक्तृभिः ॥१५७॥
विधुतं वारणे चैव नैवमित्येवमादिषु ।
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ॥१५८॥
भुग्नं लज्जान्विते योज्यं यतीनां तु स्वभावजम् ।
निर्वेदौत्सुक्यचिन्तासु नये च विनिमन्त्रणे ॥१५९॥
विवृत्तं चापि विज्ञेयं हास्यशोकभयादिषु ।
स्त्रीणामुद्वाहि लीलायां गर्वे गच्छत्यनादरे ॥१६०॥

---

१. GOS. संफोटः ।
२. NS. चिकितं दूरमुद्यतम् । KSS. चुक्षितं दूरविच्युतिः ।
३. KSS., NS. चेष्टः ।
४. NS., KSS. रुषिते क्षिते ।
५. NS. चिकितं KSS. चुक्षिते ।
६. KSS., NS. सन्दष्टः ।
७. KSS., NS. विद्युतं विनिवृत्तं च निर्भुग्नं भुग्नमेव च ।
८. KSS., NS. अर्वाङ्मुखं च ।

एवं नामेतिकार्यं च कोपवाक्य विचक्षणैः ।
समं साच्यनुवृत्तादि यच्च दृष्टिविकल्पितम् ॥१६१॥
तज्ज्ञैस्तेनानुसारेण कार्यं तदनुगं मुखम ।
अथातो [1]मुखरागस्तु चतुर्धा परिकीर्तितः ॥१६२॥
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ।
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ॥१६३॥
मध्यस्थादिषु भावेषु मुखरागः प्रयोक्तृभिः ।
प्रसन्नस्त्वद्भुते कार्यो हास्यश्रृङ्गारयोस्तथा ॥१६४ ॥
वीररौद्रमदाद्येषु रक्तः स्यात् करुणे तथा ।
भयानके सबीभत्से श्यामं सञ्जायते मुखम् ॥१६५॥
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् ।
शाखाङ्गोपाङ्गसंयुक्तः कृतोऽप्यभिनयः शुभः ॥१६६॥
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ।
शरीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ॥१६७॥
द्विगुणां लभते शोभां रात्राविव निशाकरः ।
नयनाभिनयोऽपि स्यान्नानाभावरसास्फुटः[2] ॥१६८॥
मुखरागान्वितो यस्मान्नाट्यमत्र प्रतिष्ठितम् ।
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ॥१६९॥
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ।
इत्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः ॥१७०॥
अतः परं प्रवक्ष्यामि [3]ग्रीवाकर्माणि वै द्विजाः! ।
समा नतोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ॥१७१॥
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः ।
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ॥१७२॥
नता नतास्यालङ्कारबन्धे कण्ठावलम्बने ।
उन्नतास्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने ॥१७३॥
त्र्यस्रा पार्श्वगता ज्ञेया[4] स्कन्धभारेऽति दुःखिते ।
रेचिता विधुतभ्रान्ता हावे मथननर्त्तयोः ॥१७४ ॥

---

१. KSS. मुखरागश्च चतुर्धा परिकीर्तितः ।
२. NS., KSS. नानाभावरसान्वितः ।
३. NS. ग्रीवाकर्म द्विजोत्तमाः ।
४. NS. चैव KSS. चैव स्कन्दभारेऽथ ।

कुञ्चिताकुञ्चिते मूर्ध्नि [1]धारिते गलरक्षणे ।
अञ्चितापसृतोद्वन्धकेशकर्षोर्ध्वदर्शने[2] ॥१७५॥
पार्श्वोन्मुखी स्याद्वलिता [3]ग्रीवाभेदैश्च वीक्षणे ।
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ॥१७६॥
इत्यादिलोकभावार्था ग्रीवाभङ्गैरनेकधा ।
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि[4] ॥१७७॥
शिरसः कर्मणः कर्म ग्रीवायाः सम्प्रवर्त्तते ।
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ॥१७८॥
अङ्गकर्माणि शेषाणि [5]गदतो मे निबोधत ॥१७९॥

इति भरतीये नाट्यशास्त्रे उपाङ्गविधानं नाम अष्टमोऽध्यायः ।



---

१. NS. भारिते ।
२. KSS., NS. कर्षोच्चदर्शने ।
३. KSS. NS. ग्रीवाभङ्गे ।
४. KSS. च ।
५. KSS., NS. वदतो ।

॥ श्री : ॥

# नाट्यशास्त्रम्

## नवमोऽध्यायः

एवमेतच्छिरोनेत्रभ्रूनासोष्ठकपोलजम् ।
कर्म लक्षणसंयुक्तमुपाङ्गानां मयोदितम् ॥१॥
हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं सम्प्रवक्ष्यामि विनियोगं च तत्त्वतः ॥२॥
[1]हस्तादीनां प्रवक्ष्यामि कर्म नाट्यप्रयोजकम्[2] ।
यथा येनाभिनेयं च तन्मे निगदतः शृणु[3] ॥३॥

---

### अभिनवभारती

अलङ्क्रियन्ते गात्राणि यत्स्पर्शविवशस्थितेः ।
स्पर्शतन्मात्रवपुषं संस्तुमः परमेश्वरम् ॥

शिष्याणामनुसन्धानवृद्धये प्राक्तनार्थोपसंहारपूर्वकं वस्त्वन्तरमासूत्रयन्नाह-**एवमेतदि**त्यादि । क्रियत इति कर्म अभिनेयमित्यर्थः, हस्तेति **हस्तादीनामिति** पादान्तानामनेनाध्यायेन लक्षणं वक्ष्यामि । विनियुज्यतेऽनेनेति **विनियोगः** तद्यथा—एषोऽग्नि वर्षधारानिरूपणे (९-२०)' इत्यादि । तत्रेतिकर्तव्यता—तद्यथा—'प्रविरलचलिताङ्गुलि' (९-२०) रित्यादि । **तत्त्वत** इति । अभिनयस्य द्विविधा इतिकर्तव्यता लोकधर्मी नाट्यधर्मी च । आद्या द्विविधा आन्तरा बाह्या च । तत्रान्तरा चित्तवृत्त्यर्पकत्वेनानुभावस्य, यथा—गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोच्छ्रितः' (९-१०) इति । केवलबाह्या अवयवरूपा वा, यथा—पद्मकोशस्य कथमपि निरूपणे । नाट्यधर्म्यपि द्विधा—नाट्योपयोगमूलभूतकैशिकीसम्पादनोचितालौकिकशोभाहेतुः यथा—आवेष्टिताद्विचतुर्विधकरणरूपा । काचित्त्वंशेन लोकमुपजीवति, यथा—वर्णातुरेण हस्तेन तत्र तत्र व्यवहितेन लोक उपजीव्यते । लोको ह्यनिर्देश्यताशेषं वस्तु निर्दिदिक्षुरीदृशं तादृशमित्थम्भूतमित्यत्रसरे कथयतीति प्रयुक्तमेव चतुरैः । एवं जनान्तिकादौ वाच्यम् । नटसमयमात्ररूपा नाट्यधर्मी, समयस्यकिञ्चित्करस्य कल्पने प्रयोजनाभावात् ।२-३।

---

१. NS. KSS. हस्तानां ।
२. KSS. नाट्यप्रयोजम् ।
३. GOS. गदतो मे निबोधत ।

पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥४॥
मुष्टिश्च शिखराख्यश्च कपित्थः [1]खटकामुखः ।
सूच्यास्यः पद्मकोशश्च तथा[2] वै सर्पशीर्षकः ॥५॥
मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।
[3]काङ्गुलकोऽलपद्मश्च चतुरो भ्रमरस्तथा ॥६॥
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तथा ।
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिताः[4] ॥७॥
असंयुताः संयुताश्च गदतो मे निबोधत ।
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ॥८॥
[5]खटकावर्धमानश्च ह्युत्संगो निषधस्तथा ।
दोलः पुष्पपुटश्चैव तथा मकर एव च ॥९॥
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ।
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश ॥१०॥

---

हस्तानुपदिशति पताक इत्यादिना । तथा चशब्देन त्रिपताकः प्रकारस्तस्यैव कर्तरीमुख इति दर्शनात्तन्निष्पत्तये संहितार्कार्यदृष्टाध्ययनपरशब्दगतध्यान (विषयक) शब्दवद्धस्तान्तरेऽपि दृश्यमानेन विधेयेन तद्बुद्धि दर्शयति । एवमन्येऽपि त्रिपताकादिवद् व्याख्येयाः । क्वचित्तु हस्तसदृशहस्तान्तरस्वीकाराय हंसपक्षश्च सन्दंश इति सन्दंशशब्दानन्तरं चकारेण अङ्गुष्ठमध्यमाग्रनिष्पीडिताग्रमतर्जनीलक्षणोऽपि शून्यभास्वरविद्युदाद्यभिनयविषये नृत्ताचार्यप्रवाहसिद्धः कोहललिखितोऽपि हस्तः सङ्गतो भवतीति हस्तान्तराण्युत्प्रेक्ष्याणि । ते त्वसंयुता अपि भवन्ति । संयुक्तकरणः कार्य इति (९।२०) वक्ष्यते यतः यत्राप्येतन्नास्ति तत्रापि प्रयोगयुक्त्या हस्तद्वयप्रयोगो भवत्येव, यथा परेण द्वारे नीयमाने भयात्पताकाद्वयस्यांसादिक्षेत्रे पराङ्मुखस्य प्रयोगः । एवं प्रतापनादावपि । एवमन्यत्रोत्प्रेक्षणीयम् । किञ्च पताकादीनामपि द्विशो युगपत् प्रयोगे युतत्वमभिनेयविशेषे । तद्यथा छेदाभिनये कपित्थस्य ऊर्ध्वाधोभावेन पताकस्य "कुणिच्छ अह, अस्तमच्छरगहिसीसहिच्छजत्तंति" । चित्राभिनये

---

१. KSS. कटकामुखः ।

२. GOS., सर्पशिरा तथैव च ।

३. NS. लाङ्गूलोत्पलपद्मश्च KSS. लाङ्गूलोत्पलपद्मश्च । NS., KSS. add a line in this verse. मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।

४. NS., KSS. चतुर्विंशदिमे कराः ।

५. KSS. कटका ।

नृत्तहस्तानतश्चोर्ध्वं गदतो मे निबोधत ।
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ॥११॥
स्वस्तिकौ विप्रकीर्णौ चाप्यरालखटकामुखौ ।
आविद्धवक्रौ सूच्यास्यौ रेचितावर्धरेचितौ ॥१२॥
उत्तानावञ्चितौ वापि पल्लवौ च तथा करौ ।
नितम्बौ चापि विज्ञेयौ केशबन्धौ तथैव च ॥१३॥
सम्प्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च ।
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ॥१४॥
ज्ञेयौ गरुडपक्षौ च हंसपक्षौ तथैव च ।
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा ॥१५॥
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ ।
मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ ॥१६॥
अलपद्मावुल्वणौ च ललितौ वलितौ तथा ।
सप्तषष्टिकरा ह्येते नामतोऽभिहिता मया ॥१७॥
[1]यथा लक्षणमेतेषां कर्माणि च निबोधत ।
[2]प्रसारिताः समाः सर्वा यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥१८॥

---

चैनत् । एते तु संयुता एव । नत्वेन एव, पताकादीनामपि प्रयोगे क्वचित्संयुतत्वात् । एते त्र त्रयोदश संयुक्ताव्यतिरेकेण न स्वार्थस्य गमकाः ॥८-१०॥

एतेषां त्वभिनयहस्तानामलातचक्रप्रतिमतां दर्शयितुं, मार्गाणां मसृणोद्धतछिद्रवर्तनात्मकतया मसृणतादि निवृत्तये वालुकोत्क्षेपणेन, उद्धतोत्सारणेन छिद्रच्छादनेन चैकवर्तनानुप्रवेशवत् एकाभिनेयार्थे विश्रान्ततां प्रथयितुं, नृत्तस्य च वस्तुभूतत्वेनोक्तस्य स्वरूपमभिधातुं, नृत्यन्त्यौ चेट्याविति नृत्तादिविषये तु सूचाङ्कुरादावुपयोगमपि च दर्शयितुं नृत्तशब्देन विशेष्यं निर्दिशति नृत्तहस्तानित्यादिना । संयुतासंयुतरूपोपजीविन एतइत्येकाकिनोऽपि प्रयुज्यन्ते [नाशंसन्त इति अन्येऽपि न शंसन्ति दर्शयन्ति (?)] नन्विदं यथा लक्षणं यथा च कर्मण्यभिधेयेतेति तथा निबोधतेति सम्बन्धः ॥१७॥

अथ यथोद्देशं पताकादीनां लक्षणमाह—प्रसारिता समा इति । समा इति प्रकृतिस्था इत्यर्थः । प्रसारिताग्रा वा इति पाठः । प्रसारिताः प्रधाना इत्यर्थः । समाः संहिता अविरलाः । कुञ्चितत्वं पादस्य वक्ष्यते तल्लक्षणोपजीवनेनाङ्गुष्ठ-

---

१. KSS. अथ ।
२. KSS, NS. प्रसारिताग्र (?) संहिता ।

एष प्रहारपाते प्रतापन नोदने प्रहर्षे च ।
गर्वेऽप्यहमिति तज्ज्ञैर्ललाटदेशोत्थितः[1] कार्यः ॥१९॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥२०॥
स्वस्तिक[2]विच्युतिकरणात् पल्वलपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद् द्रव्यं तच्च निर्देश्यम् ॥२१॥
स्वस्तिकविच्युतिकरणात् पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पाल्यं छन्नं निबिडं च गोप्यं च ॥२२॥

---

सन्निवेशः कार्य इत्यर्थः । पताकाकारत्वात्पताकः । अतएव पताकाप्यनेनैवाभिनेया । एवमन्येष्वपि हस्तेषु नामनिर्वचनानुसारेण विनियोगः प्रदर्शनीयः । प्रविरलचलिताङ्गुलित्वादियोगेऽपि एकदेशविकारे तत्त्वप्रत्यभिज्ञानात्पूर्वापरकोट्योश्च मूलसन्निवेशाश्रयणात्पताकात्वमेव । एवमन्यत्रापि ॥१८॥ प्रहारस्य पातने कर्तव्ये, स्वयं, परेण च क्रियमाणे । प्रतापने शीतशमनायाग्निस्पर्शग्रहणे, राज्ञां च प्रतापे शत्रुहृदयम्लानिमित्तभूतप्रसिद्धिविशेषात्मनि, तथा प्रकृष्टे च आतपे हस्तेन तस्यापहरणाय "हस्तच्छत्रनिरुद्धचन्द्रमहस" (विद्धसाल) इत्यादौ । तथा अन्यस्य प्रेरणे अन्येन वा प्रेरणे तद्वारणाय । एषु च यथा लोकप्रसिद्धिः यथा नाट्याचार्यप्रवाहश्च उर्ध्वपार्श्वगाधोमुखसम्मुखपराङ्मुखोत्तानत्र्यश्रचञ्चलाचञ्चलत्वादिविभाग उत्प्रेक्षणीयः । प्रहारे हृदयलग्नतल ईषत्कम्पमानः, प्रहर्षे च रोमाञ्चे सम्मुख उद्गते । अपिशब्दार्थसहितो (अहं) यथा अस्मदर्थो भवति अहमपि ममापि मयापि मय्यपीत्यादौ गर्वगर्भे प्रयोगे पार्श्वान्तरात्स्वपार्श्वमागच्छँल्ललाटाभिमुख उर्ध्वो हस्तः कर्तव्यः ॥१९॥ एष इति एतस्मिन्नर्थेऽभिनेता स्या (दिति चे) द्विभक्तिरतन्त्रा, एतदर्थनिरूपण इत्यर्थः । अग्नेः धारा ज्वालाः । पुष्पवृष्टिग्रहणमप्रसिद्धपांसुरवतादिवृष्टयन्तरोपलक्षणम् । संयुतकरण इति हस्तद्वयमीदृशं कर्तव्यमित्यर्थः संयुतासंयुतसम्बन्धा लोकोचिता चलनलक्षणा क्रिया यस्य तेनाग्निज्वालासूर्ध्वगमनं, जलधारासु अधोगमनमङ्गुलीनामूर्ध्वमुखहस्तस्य पुष्पवृष्टौ शिरोदेशे अधोमुखस्य स्थितस्य क्रमाञ्चलाङ्गुलेरधोगमनमिति संगृहीतम् । तेनैकाकिनोऽपि यत्प्रयोगदर्शनं तदवरुद्धम् । प्रविरलास्सत्यश्चलिताः प्रविरलं कृत्वा चलिता अङ्गुल्यो यत्रेति समासः । संयुतहस्तलक्षणात् स्वस्तिकमुपजीव्यं नृत्तस्तलक्षणाद्वा ।२०।

तेन सम्मुखौ पताकौ मणिबन्ध भुवि न्यस्तौ कृत्वा बाहुपरिभ्रमणयुक्त्या स्वपार्श्वसमं विच्युतिः तत्क्रियायाः । पल्वलं स्वल्पोदकं सरः । पुष्पप्रकरं शष्पं च हृद्यं तृणं

---

१. NS., KSS. ललाटदेशस्थितः ।
२. KSS. विच्युति ।

अस्यैव चाङ्गुलीभिरधोमुखप्रस्थितोत्थितचलाभिः ।
वार्यूर्मिवेगवेलाक्षोभश्चौघश्च[1] कर्त्तव्यः ॥२३॥
उत्साहनं बहु तथा महाजनप्रांशुपुष्करप्रहतम्[2] ।
पक्षोत्क्षेपाभिनयं रेचककरणेन[3] प्रयुञ्जीत ॥२४॥
[4]परिघृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुद्घाटनमेव[5] चाभिनयेत् ॥२५॥
एवमेष प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
पताकाभ्यां तु हस्ताभ्यामभिनेयः प्रयोक्तृभिः ॥२६॥
[6]दशाख्यश्च शताख्यश्च सहस्राख्यस्तथैव च ।
अतः परं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥२७॥
पताके तु यदा वक्राऽनामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥२८॥

---

यच्च भूमौ पिच्छिलं बलितण्डुलवैचित्र्यन्यायेन स्थापितं तदभिनयेदिति लोकांशोपजीविनी नाट्यधर्मी ॥२१॥ पुनरेवेति वचनात् स्वस्तिकस्तद्विच्युतिः विच्युतिपूर्वकः स्वस्तिक इति क्रमः । तत्राधोमुखेन स्वस्तिकेन तद्विच्युत्या च संवृतविवृतमर्धं संवृतमर्धं च विवृतम् । यथा "घटयेद्धाटकवाटघट्टित जवेन" इति । पाल्यं पतनाद्रक्षणीयं विच्युतिपूर्वकं शीघ्रं स्वस्तिककरणात्, छन्नं निबिडं स्पष्टं तथैव गोप्यं, अन्यो मा द्राक्षीदिति तज्जातं करणं स्वस्तिककरणात् । चकारेण अपाल्ये, अनाच्छन्ने, अनतिनिबिडे अगोप्ये चाभिनयः ॥२३॥ स च स्वस्तिकविच्युतिरूप इति दर्शयति । रेचयति स्वसन्निवेशाद्यापयति स्वक्षेत्राद्वा या क्रिया तद्रेचककरणम् । तथा यथायोगं तत्र परस्योत्साहनं प्रेरणं उत्साहजननं सत्पुरुषाभिनयनं च विरलाङ्गुलिक्षेपेणालपल्लवाकारवत् प्रधानं वस्तु अक्रमकरणेन निजपार्श्वगमनेन पार्श्वान्तरात् । प्रांशुन्नतमूर्ध्वगतात् पुष्करप्रहणने अधः पातनं, पक्षं पतत्रिणां मुहुरूर्ध्वं कटिक्षेत्रे उत्साहनवत् उत्क्षेपं कृतमथोर्ध्वगमनेन । अभिनयशब्दवत्पाल्यं च । अभिनयशब्दस्य वैचित्र्यं पश्यन्तः उपाध्याया व्याचक्षते अभिशब्देनाभिमुख्यं, नशब्देन निषेधो, यशब्देन

---

१. NS. क्षोभाश्चौघश्च KSS. क्षोभश्चौघश्च ।
२. NS. प्रहतिम् ।
३. KSS. करणैः ।
४. KSS. परिमृष्ट ।
५. NS. मुत्पाटन ।
६. NS., KSS Omit this verse.

आवाहनमवतरणं विसर्जनं वारणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥२९॥

मङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ सन्निवेशश्च ।
उष्णीषमुकुटधारणं नासास्यश्रोत्रसंवरणम् ॥३०॥

अस्यैव चाङ्गुलीभ्यामधोमुखप्रस्थितोत्थितचलाभ्याम्[1] ।
[2]लघुपवनस्रोतोभुजगभ्रमरादिकान् कुर्यात् ॥३१॥

अश्रुप्रमार्जने[3] तिलकविरचनं रोचनयालम्भनकं च ।
त्रिपताकानामिकया स्पर्शनमलकस्य[4] कार्यञ्च ॥३२॥

---

यदर्थो लक्ष्यते, तेन स्वपार्श्वोन्मुखदेशागमनेनाभिमुख्यमभिमुखत्वं पार्श्वक्षेत्रे तु रेचनपूर्वमधोमुखोत्तानपरिवर्तनेन च यच्छब्दार्थमभिनयेदिति ।२४। परिशब्दः शैघ्र्यात्पार्श्वतोऽर्थे उभयतो वाऽर्थे समन्तादर्थे च, तेन परिघृष्टं यत्तलं तत् द्वितीयपताकहस्तेन पताकाकारेण क्षालनं मर्दनं मार्जनं पेषणं तद्विशिष्टमपि द्रव्यमभिनयेत् । यथाक्रमं च परिशब्दार्थे योज्यं पुनश्शब्दः । पर्वतोद्धारणं शैलशिलादेश्चोत्पाटनम् । चकाराद्वरदानमभयदानमित्येवमाद्यभिनयेत् । परिघृष्टेतीतिकर्तव्यतां प्रसक्तां वारयितुमेवकारः, "एनतु पुणापरिअञ्चिइर्ति कोर्णे जिजिआलिह" (?) इत्यादौ यथापुनः शब्द एवार्थद्योतकस्तथाङ्गिकेऽपि पताकादिस्तथेति व्यवहारदर्शनात् ॥२५॥ न चैतावानेवास्य विषय इति दर्शयितुमाह—एवमनेन प्रकारेण स्वबुद्धया तां तामितिकर्तव्यतामुत्प्रेक्ष्य प्रयोक्तव्यः । स्त्रीपुंसयोरुभयोरपि अभिनेत्रोरभिनेययोर्वा । अन्ये तु नपुंसकलिङ्गस्य स्त्रीपुंसाभ्यामेव स्वीकारात् समस्ते शब्दार्थेऽभिनेतव्ये विशिष्टेतिकर्तव्यतायुक्तस्यार्थस्य प्रयोग इत्याहुः ॥२६॥

अथ त्रिपताकमाह **पताकेत्त्वि**त्यादि । अनामिका वक्रा कनीयसीतर्जनीमध्यमानां तिसृणां पताकवदवस्थानात् त्रिपताकः त्रित्वस्याभिनेयाद्वा । **कर्मे**त्यभिनेयम् ।२७-२८। आवाहनं पराङ्मुखीनतर्जनीमध्यमाकुञ्चनात्, "आर्ये इतस्तावत्" इत्यादौ । रथादेः **अवतरण**मधस्तलकृतेन पार्श्वान्तरगमनात् "अवतरत्वायुष्मान्" इत्यादौ । **विसर्जन**मनादरकृतं बहिरङ्गुलिद्वयक्षेपात् । **वारणं** "एवं मा कार्षी" रिति प्राङ्मुखेनाङ्गुलिद्वयचलनात् । **प्रवेशनं** पार्श्वतलेनाग्रगमनात् यावत्प्रविशामीति । यथोन्नामनं चिबुकादौ लालनेनोत्तानाङ्गुलिद्वयात् । **प्रणमनं** शिरोगतेन पार्श्वतः प्रणयनात् स्वसमर्पणम् । **प्रदर्शन**मुपमानोपमेयभावेनेषद्विरलेनाङ्गुलिद्वयेन । विविध विचित्रमिदं वा स्यादिदं वेत्यादिना अङ्गुलियुगनामोन्नामात् । वचनं भाषणं मुखक्षेत्रे उत्तान-

---

१. KSS. प्रस्थितौ स्थितचलाभ्याम् ।

२. NS. लघुमुखपवनस्रोतो KSS. लघुचटपवनस्रोतो भुजगन ।

३. KSS., NS. अश्रुप्रमार्जनतिलक... ।

४ NS. स्पर्शनमलिकस्य KSS. दर्शनमलकस्य कार्यञ्च ।

[1]स्वस्तिकौ त्रिपताकौ तु गुरूणां पादवन्दने[2] ।
विच्युतौ च ।लितावस्थौ कार्याबुद्वाहदर्शने ॥३३॥

परस्पराग्रसंश्लिष्टौ कर्त्तव्यौ नृपदर्शने ।
तिर्यक् स्वस्तिकसम्बद्धौ स्यातां तौ ग्रहदर्शने ॥३४॥

तपस्विदर्शने कार्यावूर्ध्वौ चापि पराङ्मुखौ ।
परस्पराभिमुखौ च कर्त्तव्यौ वरदर्शने ॥३५॥

उत्तानाधोमुखौ कार्यावग्रे वक्त्रस्य संस्थितौ ।
वडवानलसङ्ग्राममकराणां च दर्शने ॥३६॥

---

स्याग्रगमनात् ।२६। मङ्गल्यद्रव्याणां पूर्णकुम्भादीनामधोमुखेनाङ्गुलिद्वयेन । स्पर्शः द्रव्यादीनां शिरसः स्पर्शः । निवेशनं निवेशः सम्बन्धोऽनामिकया शिरसो वा सन्निवेशनं तत्क्षेत्रे सम्मुखमण्डलगतेनोष्णीषधारणं, शिरस्यधोमुखेन भ्रमता मुकुटधारणं तूर्ध्वक्षेत्रे । संवरणमनिष्टे गन्धे वचने च शब्देऽपि नासादौ अङ्गुलीद्वयेनाच्छादनम् ॥३०॥ अस्यैव चेति । अतश्च मुकुटादिदर्शनेन तद्धेतोः राजादेरप्यभिनयः, तेन येन हस्तेनाभिनेयं यत्राव्यभिचारित्वेन बहुशो निर्दिष्टं तदनिर्दिष्टमपि तेनैवाभिनेयम् । यथा मुकुटधारणाभिनयेन राजांशः रेचितपताकयोगेन दर्शितः । अंगुल्यौ ये नित्य श्लिष्टे इत्येवकारः, तेन च त्रिपताकन्यस्त इत्यस्य ग्रहणम् । चकारेणान्वाचयकृत मङ्गुल्यन्तरस्य अधोमुखादिरूपत्वमनुजानाति । अधोमुखे च द्वे प्रस्थानोत्थानयो चले चेति समासः । लघून्पक्षिणश्चटकादीन्, कटिक्षेत्रे लघुचालं । लघु च स्रोतः क्रमेणोर्ध्वमधस्तिर्यग्गत्या लघुसर्पानिग्रगत्याभिनयेत् । भ्रमरमक्षिकादीनां पुनरुपपादनं पक्षित्वेनाप्रसिद्धे:, तेन कटीक्षेत्रत्यागेन यथेष्टमेषां क्षेत्रमित्युक्तं भवति ॥३१॥ अश्रुणस्तत्प्रमार्जनस्य चानामिकया स्वक्षेत्रगतयाधोगच्छन्त्याभिनयः । तिलकस्याभिनयो रोचनाचन्दनादिना तद्विरचनस्य च । एतेन क्रियाफलयोस्तुल्याभिनयोऽन्यत्रापीति सूचयति । तेन पतनवत्पतितोऽपि कर्तरीमुख इत्याद्यूह्यम् । रोचनाचन्दनस्य मङ्गल्यतिलकादिना स्वीकारादिकं व्याचक्षते । रोचनया अरुणरुचिर्लक्ष्यते, तत्रानामिकाद्वयसंघट्टेनाभिनयः । यथा—

कोउद्दल्लणाहं तथा तथा च केन समाणिवश्शाक्रः ।
सूकरं भर्जसुखं च दुःखं च ॥ (?)

आलम्भनं शरीरस्पर्शनं, द्रोणिकाचमनम्; तस्मात् संज्ञायामपि कन् । संज्ञैवेयमिति लभेरत्रासंभवात् । आङीषदर्थे उपसर्गः, न नञ् समासः, स्वल्पत्वं च । अत्रातिगौरवातिस्नेहादिना तथानामिकयैव स्पर्शनात् "गामी अवा उच्चं अभीहउ-

---

१. KSS. does not read स्वस्तिकौ to नृणां प्रयोक्तृभिः ।
२. NS. पादवन्दनम् ।

अभिनयास्त्वनेनैव वानरप्लवनोर्मयः ।
पवनश्च स्त्रियश्चैव नाट्ये नाट्यविचक्षणैः ॥३७॥

संमुखप्रसृताङ्गुष्ठः कार्यो बालेन्दुदर्शने ।
पराङ्मुखस्तु कर्त्तव्यो याने नृणां प्रयोक्तृभिः ॥३८॥

त्रिपताके यदा हस्ते भवेत् पृष्ठावलोकिनी ।
तर्जनी मध्यमायाश्च तदासौ कर्तरीमुखः ॥३९॥

[1]पथि चरणरचनरञ्जनरङ्गणकरणान्यधोमुखेनैव ।
ऊर्ध्वमुखेन तु कुर्याद् दष्टं शृङ्गं च लेख्यं च ॥४०॥

पतनमरणव्यतिक्रमपरिवृत्तवितर्कित तथा न्यस्तम् ।
भिन्नवलितेन कुर्यात् कर्तर्यास्याङ्गुलिमुखेन ॥४१

[2]संयुतकरणो वा स्यादसंयुतो वा प्रयुज्यते तज्ज्ञैः ।
रुरुचमरमहिषसुरगजवृषगोपुरशैलशिखरेषु ॥४२॥

यस्याङ्गुल्यस्तु विनताः सहाङ्गुष्ठेन चापवत् ।
सोऽर्धचन्द्रो हि विज्ञेयः करः कर्मास्य वक्ष्यते ॥४३॥

एतेन बालतरवः शशिलेखाकम्बुकलशवलयानि ।
[3]निर्घाटनमायस्तं मध्यौपम्यं च पीनं च ॥४४॥

---

तोरड" (?) इति स्पर्शनमलकस्य रचनार्थं स्थानान्तरनयनं; यथा रत्नावल्यामुदयनेन सुसङ्गतायाः। अलिकस्य ललाटस्य दर्शनमलकभञ्जनेनोत्तानालकसञ्जनमित्यादावित्यन्ये ॥३२॥

कर्तरीमुखं लक्षयति त्रिपताक इति । चकारेण परो नीयते । **अवलोकिनीति** असंश्लिष्ट इति यावत्। कर्तर्या ईदृशमेव रूपं साध्यते तथानीयते । **पथीति** पृथक्पदमित इत इत्यादौ मार्गप्रदर्शने, तेनात्राधोमुखेनेति संबध्यते । चरणस्य रचनं कस्तूरिकादिना पत्रभङ्गादिक्रिया रञ्जनमलक्तकेन । रज्यत्यस्मिन् हृदयमिति रङ्गः कुङ्कुमादिकृतश्चतुष्कोष्ठे भङ्गस्तिलकादिः तं करोति रङ्गयति । एवकारेण तर्जनीमुखलक्षणमुखस्याधोगतनानन्तरमेव पृष्ठावलोकित्वं पुनरधोगमनं पुनः पृष्ठावलोकनमिति चलनमाह । **दष्टमिति** दंशनं तत्तुल्यं च कर्तनादि नासिकाक्षेत्रात् कर्णान्तं गच्छता, शृङ्गं स्वङ्गक्षेत्रे हस्तद्वयेन, लेख्यं पत्रकाविष्टस्य वाचनम् । व्यतिक्रमोऽपराधः ॥४०॥

---

१ NS. पथिकरण KSS. पथिकचरणरचनरञ्जनगमन· ।

२. NS. does not read it.

३. KSS. निघटन ।

[1]रशनाजघनकटीनामाननतलपत्रकुण्डलादीनाम् ।
कर्त्तव्यो नारीणामभिनययोगोऽर्धचन्द्रेण ॥४५॥

आद्या धनुर्नता कार्या कुञ्चिताङ्गुष्ठकस्तथा ।
शेषा भिन्नोर्ध्ववलिता[2] ह्यरालेऽङ्गुलयः करे ॥४६॥

एतेन सत्त्व[3]शौण्डीर्यवीर्यधृतिकान्तिदिव्यगाम्भीर्यम् ।
आशीर्वादाश्च तथा भावा[4] हितसंज्ञकाः कार्याः ॥४७॥

एतेन पुनः स्त्रीणां केशानां संग्रहोत्कर्षौ[5] ।
सर्वाङ्गिकं तथैव च [6]निर्वणनमात्मनः कार्यम् ॥४८॥

कौतुकविवाहयोगं प्रदक्षिणेनैव संप्रयोगं च ।
अङ्गुल्यग्रस्वस्तिकयोगान् परिमण्डलेनैव ॥४९॥

---

परिवृत्तं पराङ्मुखीभूतं विपर्यस्तं च । वितर्कितमूहनम् । न्यस्तं निक्षेपणम् । भेदनं वैपरीत्यं मध्यमयोस्तर्जनीपृष्ठगत्वं, चलनं पुनः स्वरूपाप्तिस्तयोः समाहारे द्वन्द्वः । एतेन यथायोगं संघातविगृहीतविपर्यस्तप्रयोगो द्विस्त्रिश्चेत्याद्यूह्यम् । कर्तर्यास्यस्य कर्तरीमुखस्य यदङ्गुलीरूप मुखं प्रधानं तेन भेदनवलनसहितेनेति सङ्गतिः ।४१-४२।

अर्धचन्द्रमाह—सहाङ्गुष्ठेनेति । अङ्गुष्ठोऽपि विनतः चापवदिति श्लिष्टाह्रस्वत्वं निषेधति । ख्यात इति नाम्नैव लब्धरूपः ॥४३॥ बालतरवश्चोर्ध्वं गच्छता, उपर्युक्तानेन, अर्धेन्दुरित्यन्वर्थबलाल्लब्धम् । तेन शशिलेखेत्यनेन लेखामात्रमभिनेयं विश्लिष्टतर्जनीकेनेत्युक्तं भवति ।

कम्बुरिति शंख एवानेनाभिनेयः तद्ग्रहणं तु कर्कटे वक्ष्यते । प्रकोष्ठान्तरसंमुखेन वलयः । निर्घाटनं बलान्निष्कासनमिति । तस्यायस्तमटवीघोषणमित्यसत्, आयस्तं खेदं पराङ्मुखेन गण्डभ्रूविभ्रमात्तमभिनयेत् । मध्ये उदरादौ । उपमीयत इत्युपमा ततः ष्यञ्, तेनायमर्थो मध्यस्य यदुपमीयमानत्वं कार्श्यं तदभिनयेत् । पीनं च पीवरं, अर्धान्त्यमध्यमेव । चकारादर्धचन्द्रद्वयेनाभिनयेत् । अन्ये तु पानं चषकादि व्याचक्षते पानति पठन्तः ।४४। जघनो कटेरग्रभागः, पार्श्वभागश्च कटी । आननतले च पत्राणि भङ्गा । तलपत्रमाभरणविशेषः पत्रं दन्तपत्रं

---

१. NS. रसना ।
२. KSS. ह्यरालाङ्गुलयः ।
३. NS. शौण्डीर्यधृतिकान्तिदिव्य । KSS. शौण्डीर्यवीर्यधृतिकान्तिदिव्य ।
४. KSS. भावाभिसंज्ञकाः कार्याः ।
५ KSS. सङ्ग्रहोत्कर्षौ ।
६. KSS. निर्वहण ।

प्रादक्षिण्यं परिमण्डलं च कुर्यान् महाजनं चैव ।
यच्च[1] महीतलरचितं द्रव्यं तच्चाभिनेयं स्यात् ॥५०॥

[2]आह्वाने च निवारणनिर्माणे चाप्यनेकवचने च ।
स्वेदस्य चापनयने[3] गन्धाघ्राणे शुभः शुभे चैव ॥५१॥

त्रिपताकहस्तजानि तु पूर्वं यान्यभिहितानि कर्माणि ।
तानि [4]त्वरालयोगात् स्त्रीभिः सम्यक् प्रयोज्यानि ॥५२॥

अरालस्य यदा वक्राऽनामिकात्वङ्गुलिर्भवेत् ।
शुकतुण्डस्तु स करः कर्म चास्य निबोधत ॥५३॥

---

नलिनीदलं वा । आदिशब्दान्मृणालादि । एतच्च तत्तत्क्षेत्रगेन यथायोगं पार्श्वद्वययोगं पार्श्वद्वयान्तादधोवर्त्तितलेनैकैकेनान्यसहितेन वाभिनयेत् ।४५।

अरालमाह—आद्या धनुर्नतेति । आद्यास्तर्जनीमध्यमादयः कनिष्ठान्ताः पूर्वस्याः पृष्ठेष्वदूरे तिष्ठन्तीति । अयं हस्तस्त्वरालः कुटिलत्वात् । अरालपक्ष्मण इत्यादौ वक्रार्थेऽरालशब्दः ।४६। सत्त्वं स्थैर्यम्, शौण्डीर्यं गर्वः । वीर्यमुत्साहः । कान्तिश्शोभा, दिव्यं गगनस्थं, गाम्भीर्यं—

यस्य प्रभावादाकाराः क्रोधहर्षभयादिषु ।
भावेषु नोपलक्ष्यन्ते गाम्भीर्यमिति तत्स्मृतम् ॥

आशीर्वादाः स्वस्ति भद्रं पुण्याहमित्यादयः । हितसंज्ञकाः सुखभावाः । तत्र हृदि पार्श्वेऽग्रतः स्थैर्येण चलत्वेन भ्रमणागमनं यथायोगं प्रयोगः । एतावत्यंशेऽप्यभिनेयमरालेन ॥४७॥ संग्रहो बन्धनं केशानाम् । उत्कर्षो विकीर्णतापादनम् । पुनर्ग्रहणाद्द्विस्त्रिरन्तरालस्य गमनभ्रमणादि लभ्यते । तथैव चेति यथा सर्वाङ्गनिर्वर्णनं भवति तथा कार्यमिति । तेन द्वितीयपार्श्वात्स्वपार्श्वगमनं लभ्यते ।४८। कौतुकं विवाहात्पूर्वभावी वधूवरयोराचाराः अन्तर्विवाहे प्रसिद्धः । विवाहोऽग्नौ साक्षिणि बध्वा वहनम् । अङ्गुल्यग्राणां हस्तद्वयगतानां स्वस्तिकाकारेण यद्योजनं तेनोपलक्षितेन परिमण्डलं प्रदक्षिणदिक्क्रमेव भ्राम्यता कौतुकविवाहयोगोऽभिनेयः । चशब्दस्तुशब्दस्यार्थे । एवकारो भिन्नक्रमः । सम्प्रयोगः संश्लेषमात्रस्तु अंगुल्यग्रस्वस्तिकयोगादेव केवलात् ।४९। देवताविषयं प्रदक्षिणक्रमं, परिमण्डलं वर्तुलं, महाजनं जनसमूहः । विरचितं पुष्पप्रकरादि । एतेनैव परिमण्डलेन पार्श्वान्तरात्स्वपार्श्वं गच्छताभिनयेत्

---

१. KSS. NS. महीतलनिहित ।
२. NS., KSS निवापेनिन्दाक्षेपाद्यनेकवचने च ।
३. KSS. चाभिनयने गन्धघ्राणे शुभा चैव । NS. गन्धघ्राणे शुभे चैव ।
४. KSS., NS. त्वरानुयोगात् ।

एतेन त्वभिनेयं नाहं न त्वं न कृत्यमिति चार्थे।
आवाहने विसर्गे धिगिति वचने च सावज्ञम् ॥५४॥

अङ्गुल्यो यस्य हस्तस्य तलमध्येग्रसंस्थिताः।
तासामुपरि चाङ्गुष्ठः सः मुष्टिरिति संज्ञितः ॥५५॥

एष प्रहारे व्यायामे निर्गमे पीडने तथा[1]।
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे[2] तथा ॥५६॥

अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते।
हस्तः स शिखरो नाम तदा[3] ज्ञेयः प्रयोक्तृभिः ॥५७॥

---

।५०। आह्वाने पतदङ्गुलि। निवारणे वहिः क्षिप्ताङ्गुलि। निर्माणं अपूर्वं उदयः यथा उदितो भगवान् मृगलांञ्छनः। "भगवं मिअलंछक" इत्यादौ। निश्शेषेण वा मानं परिच्छेदो वर्तनं वा, यथा "जलणिहिअलं वेआ" (जलनिधितलं वेगात्) इति। निर्दानं तृणाद्युत्पाटनमित्यन्ये। अभूता सृष्टिर्वीप्सा निर्दानमित्यन्ये। अनेकं पृथग्भूतं संबन्धाभावरूपं यत्रोच्यते तत्र पुनः बहिः क्षिप्ताङ्गुलेः प्रयोगः। यथा "कहिं ह कहिं ह" इत्यादौ। गन्धस्य सुरभित्वादाघ्राणम्। शुभः शुभे चैष इति पाठः। एष हस्त इत्यर्थः। चैवेत्यन्ये पठन्ति अध्याहारं कल्पयन्तः, एवकारेण तत्क्षेत्रगत्वं हस्तस्येत्याहुः ।५१। त्रिपताकस्य यान्यावाहनमवतरणमित्यादीन्यभिनेयानि तान्यरालस्य यत्प्रयोगाङ्ग-युक्त्या सम्पत्तिर्भवति तत्तेनापि प्रयोज्यानि स्त्रीभिः न तु तासां त्रिपताकः निषिध्यते, पुंसस्त्रिपताकस्थानेऽरालो निषिध्यते ।५२।

शुकतुण्डमाहारालस्येति। तुः पूर्वस्माद्विशेषमाह। द्वितीयस्तुरपिशब्दार्थे, तर्जन्या अपि वक्रिमाणमनुजानाति तदाकारत्वात्। शुकतुण्ड इति शब्देन प्रत्येकमेक एवं ह्ययं वाक्यार्थः। नाहं न त्वं, न कृत्यमिति। न च सर्वथा निषेधे अयमभिनयः, अपि तु अर्थे अर्थनायां सत्यामीर्ष्याप्रणयकलहादाविति यावत्, अर्थनमर्थः, "अकर्तरि" इति घञ्। सावज्ञं यदाह्वानं विसर्गश्च पञ्चभिरङ्गुलिभिः क्षेपात्स्पृश्य इतिकर्तव्यता, सकृत्, द्विस्त्रिर्वा प्रयोगयुक्त्या। धिगित्यनेन निन्दार्थेनानु-पादेयं लक्ष्यते, "किन्तेन बालवधपातकदूषितेन" इत्यादावयमभिनय इत्यर्थः ॥५३-५४॥

मुष्टिमाह—अङ्गुल्यो यस्येति। तलमध्य इति अङ्गुष्ठमूलाशङ्कां शमयति। अग्रे सम्यक्स्थिता इति अग्रगोपनेन विरलत्वं परिहरति। उपरीति मध्यमाङ्गुलिदेशं सम्पीडयन्नित्यर्थः। संज्ञितः लोके ह्यत्रैव मुष्टिशब्दः प्रसिद्ध इत्यर्थः। व्यायाम इति

---

१. NS., KSS. हस्तपीडने।
२. NS., KSS. दण्डकुन्तग्रहे।
३. NS. तथा।

रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणे[1] चैव ।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥५८॥

अस्यैव शिखराख्यस्य ह्यङ्गुष्ठकनिपीडिता[2] ।
यदा प्रदेशिनी वक्रा स कपित्थस्तदा स्मृतः ॥५७॥

असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि[3] ।
शस्त्राण्यभिनेयानि तु [4]कार्यं सत्यं च पथ्यं च ॥६०॥

उत्क्षिप्तवक्रा[5] तु यदानामिका सकनीयसी ।
अस्यैव तु कपित्थस्य तदासो खटकामुखः[6] ॥६१॥

होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं व्यजनकञ्च ।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥६२॥

---

युद्धे प्रतिमल्लप्रकोष्ठग्रहणे खड्गयुद्धे च । निगमे आर्द्रकादिस्वरसस्य निष्कासने । पीडने स्तनपीडने गोमहिष्यादिदोहने च । संवाहने मृत्पीडने अथवा मृदुपीडने । असियष्टीनामत्र यष्टीनामिति बहुवचनग्रहणात् छुरिकायुद्धदण्डधारण इत्यादि योज्यम् । तथेति संवाहने धारणे मारणे मार्जने वा ॥५५-५६॥

शिखरमाह अस्यैव चेति । पुनर्मुष्टिग्रहणं (मुष्टिकर्तृणामधिकारे ?) मुष्टेराकारे शिखरेणाभिनेये द्वये तत्कर्मणां च दृढपीडनादौ मुष्टिमाह—अतः एवोक्तं प्रयोक्तृभिरिति । रश्मिः प्रग्रहः किरणो वा तेषां संवाहनं ग्रहणमिति संबन्धः । अत्र च द्वयोरेकस्य वा प्रयोगः उत्तानाधोमुखपार्श्वगादिभिश्च । प्रयोगानुसारेणालकस्योत्क्षेपणं गण्डतलादेरुत्पीडनं वा कुटिलीकरणार्थम् ॥५७-५८॥

कपित्थमाह अस्यैवेति; नामोच्चारणस्य पूर्ववत् प्रयोजनं, कपित्थाकारेऽस्मिन् अङ्गुष्ठतर्जन्यावङ्गुली । शस्त्राणीति शराकर्षणानीत्यर्थः । कार्यं सुकृतम्, अत्र छोटिकाप्रयोगः ॥५९-६०॥

अथ खटकामुखमाह - उत्क्षिप्तवक्रेति । उत्क्षिप्ता सती वक्रा अनामिका कपित्थस्येति पुनर्नामोच्चारणात् शराकर्षणकार्यसत्यपथ्यादावस्य प्रयोगः । तुरेकः पूर्वस्माद्विशेषे, तुर्द्वितीयोऽवधारणे । विरलत्वं मनाक् अनामिकाकनिष्ठिकयोर्भवति सकनीयसी । सहशब्दात् विश्लेषाशङ्का न स्यात् । खट् काक्षांयामित्यस्मात् क्षुत्तृट्पिपासातीर्थेषु

---

१. KSS., NS. प्रमोक्षणं ।
२. KSS., NS. मुखेऽङ्गुष्ठनिपीडिता ।
३. GOS. वज्रवर्गाणि ।
४. KSS., NS. read as कार्यं सत्यं च पथ्यं च ।
५. KSS. चक्रा ।
६. KSS. कटकामुखः ।

आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव ।
स्रग्दामपुष्पमाला वस्त्रान्तालम्बनं चैव ॥६३॥
मन्थनशरावकर्षणपुष्पावचयप्रतोदकार्याणि ।
अङ्कुशरज्वाकर्षणस्त्रीदर्शनमेव कार्यं च ॥६४॥
[5]खटकास्ये यदा हस्ते तर्जनी संप्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥६५॥
[6]अस्य विविधान् योगान् वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनतलोलकम्पितविजृम्भितोद्वाहितचलायाः ॥६६॥

वुन् । खटको विटविभ्रमगतिधूः, तस्य आमुखे यतोऽयं वक्ष्यतेऽतः खटकामुखः ॥५१॥ होत्रं स्रुगादि उत्तानेन । हव्यमाज्याद्यामुखेन । प्रग्रहस्य वल्गादेः परिकर्षणं गतिरोधनाय । व्यजनं तालवृन्तादिकं चलता । आदर्शधारणं संमुखेन । आदर्शो ज्ञातो याभिस्ता गौरीवस्वाकारिकामनेनाभिनयन्ति खण्डनं तालवृन्तादिव्यजनव्यापारो वा । पेषणं कुङ्कुमस्य मृगमदचन्दनचन्द्रादेः हस्तद्वयेन भागद्वये दीर्घवृत्तचङ्क्रमणाद्यैः, "परिवृत्तपाद" इत्यादौ ॥६२॥ आयतदण्डकाष्ठादीनां ग्रहणं, मुक्ताप्रालम्बानात्मआदौबाहुद्वयमुभयान्तग्रहणसूचकम् ?) वाहुद्वयोयोभयान्ताभ्यां संग्रहणं सूच्यते । वस्त्रान्तालम्बनं च विवाहे वधूनां प्रणयकोपादौ च पथानुसरणे । आकर्षणस्य केलिवशेन केशादेरयतःभिनयः । उत्तरीयालम्बनं स्वभावायोगात् स्त्रीप्रदर्शनेऽयमभिनयः, स्वक्षेत्रे चातुरश्र्यार्थं तत्कूर्परावधि द्वितीयस्य निवेशं कुर्वन्ति ॥६३-६४॥

सूचीमुखमाह खटकाख्य इति सूच्याकारमेवास्य मुखम् ।६५। नता अधोमुखी लोला पार्श्वान्तिरं यान्ती, कम्पिता तत्रैव स्पन्दमाना, विजृम्भिता व्याकुञ्चिता, प्रसारिता ऊद्वाहिता ऊर्ध्वं गच्छन्ती, चला अभिनयत्वेन व्रजन्ती ।६६। चक्रम् आयुधे कर्मोपकरणे रथाङ्गे च राष्ट्रजने च । चक्रे ऊर्ध्वमुखं पार्श्वगतं पार्श्वान्तिरं भ्रमन्ती कार्या, विद्युत्युर्ध्वमुखा गतागता । एवमन्यत्रोत्प्रेक्ष्यम् । मञ्जर्यो लताः, कर्णचूलिका कर्णपूरः कुटिलगतयो मीनाद्याः, साधुवादाः भद्रं शोभनमित्याद्याः ।६७। बालसर्पाणां पृथगुपादानं गतिवैलक्षण्यान्मीनेभ्यः । बल्लीलतामञ्जरीणामवान्तरभेद उत्प्रेक्ष्यः तद्यथा – अलाबूभृतयो वल्ल्यः । द्राक्षाप्रभृतयो लताः । चूतादीनां मञ्जर्यः । शिखण्डः कुमाराणां काकपक्षः । परिपतनं पातः, वक्रं वक्रत्वं, मण्डलं वर्तुलत्वं, समाहारे द्वन्द्वः । उर्ध्वलोलितत्वोक्तिः प्रयोगवृत्त्या वैचित्र्येण विभजनीया ।६८। भूयो बहुतरमित्यस्मिन्नर्थे चायमभिनयः । तारा नक्षत्राणि । घोणा नासिका । एकः एकत्वसङ्ख्या । दण्डः परं प्रतितर्जनम् । यष्टिः लगुडः पृथुर्वा, नक्षत्रे तर्जन्यूर्ध्वा । दंष्ट्रिषु चकाराद्दंष्ट्रित्वेना प्रसिद्धे-

५. KSS. कटकाख्ये ।
६. KSS., NS. अस्या ।

उद्वाहित[1]मूर्ध्वंगतमुरो ज्ञेयं [2]प्रयोक्तृभिः ।
दीर्घोच्छ्वसनता लोके जृम्भणादिषु चेष्यते ॥२३३॥

सर्वैः ससौष्ठवैरङ्गैश्चतुरस्रकृतैः कृतम् ॥
उरः समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥२३४॥

एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अत [3]ऊर्ध्वं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥२३५॥

नतं समुन्नतं चैव प्रसारितविर्वातते ।
[4]तथापसृतमेवं तु पार्श्वयोः कर्म पञ्चधा ॥२३६॥

[5]कटिर्भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांसं च किञ्चित्पार्श्वंनतं स्मृतम् ॥२३७॥

[6]तस्यैव चापरं पार्श्वं विपरीतं तु युक्तितः ।
कटीपार्श्वभुजांसैश्चाभ्युन्नतैरुतं भवेत् ॥२३८॥

आयामनादुभयतः पार्श्वयोः स्यात् प्रसारितम् ।
[7]परिवर्तात्त्रिकस्यापि विर्वाततमिहेष्यते ॥२३९॥

[8]विर्वातितापनयनाद् भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥२४०॥

उपसर्पे नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं प्रहर्षादौ परिवृत्ते विर्वाततम् ॥२४१॥

[9]विनिवृत्ते त्वपसृतं पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥२४२॥

---

शिष्टकटीत्रिकस्कन्धकर्माणि पार्श्वकर्माणीति ॥२४०॥

---

१. GOS. तूर्ध्वंकृत ।
२. KSS. प्रयोगतः ।
३. GOS. परं ।
४. KSS तथा पसृतमेवं ।
५. GOS. कटी ।
६. GOS. नतस्यैवापरं ।
७. KSS, NS परिवर्ति ।
८. NS. विर्वातितोपनयनात् KSS. विर्वातितापनयनात् ।
९. KSS. परिवर्तो ।

क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षामं नतं खल्वं पूर्णमाध्मातमुच्यते ॥२४३॥

क्षामं हास्ये[1]ऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि श्रान्ते क्षुधार्ते खल्वमिष्यते ॥२४४॥

पूर्णमुच्छ्वसिते स्थूले व्याधितात्यशनादिषु ।
इत्येतदुदरं प्रोक्तं कट्याः कर्म निबोधत ॥२४५॥

अन्ये तु क्षामं खल्लं समं पूर्णमुदरं स्याच्चतुर्विधम् ।
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ।
उद्वाहित्ता चैव कटी नाट्ये नृत्ते च पञ्चधा ॥२४६॥

कटी मध्यस्य वलनाच्च् छिन्ना संपरिकीर्तिता ।
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निर्वात्तता ॥२४७॥

सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी ।
तिर्यग्गतागता क्षिप्ता[2] कटी ज्ञेया प्रकम्पिता ॥२४८॥

नितम्बपार्श्वोद्वहनात् शनैरुद्वाहिता कटी ।
कटीकर्म मया प्रोक्तं विनियोगं निबोधत ॥२४९॥

छिन्ना व्यायामसंभ्रान्तव्यावृत्तप्रेक्षणादिषु ।
निवृत्ता वर्तने चैव रेचिता भ्रमणादिषु[3] ॥२५०॥

कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ।
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च ॥२५१॥

कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ।
निवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥२५२॥

नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तरं जानु[4] यत्र तद्वलनं स्मृतम् ॥२५३॥

स्तम्भनं चापि विज्ञेयमपविद्धक्रियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥२५४॥

---

गतेषु तदुक्तमपविद्धक्रियात्मकमिति निष्क्रियत्वमिति यावत् ॥२५४॥

---

१. KSS. हासे च ।
२. GOS. क्षिप्तं ।
३. KSS. भ्रमणेण च ।
४. KSS. NS अभ्यन्तराज्जानु ।

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्तु निवर्तनम्।
गतिष्वधमपात्राणां भये चापि हि कम्पनम् ॥२५५॥

वलनं चैव कर्त्तव्यं स्त्रीणां स्वैरपरिक्रमे।
साध्वसे च विषादे च स्तम्भनं तु प्रयोजयेत्[1] ॥२५६॥

व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः।
निवर्तनं तु कर्तव्यं संभ्रमादिपरिभ्रमे ॥२५७॥

[2]यथादर्शनमन्यच्च लोकाद् ग्राह्यं प्रयोक्तृभिः।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घायास्तु निबोधत ॥२५८॥

आवर्तितं नतं क्षिप्तमुद्वाहितमथापि च।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥२५९॥

वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः।
पादो यत्र व्रजेद्विप्राः! तदावर्त्तितमुच्यते ॥२६०॥

जङ्घास्वस्तिकयोगेन क्रमादावर्तितं नयेत्।
जानुनः [3]कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः।

[4]विक्षेपाच्चैव जङ्घायाः क्षिप्तमित्यभिधीयते ॥२६१॥
[[5]नतं स्याज्जानुनमनात् क्षिप्तं विक्षेपणाद् बहिः]।

उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादपि।
प्रतीपनयनं यत्तु परिवृत्तं तदुच्यते ॥२६२॥

आवर्तितं प्रयोक्तव्यं [6]विदूषकपरिक्रमे।
नतं चापि हि कर्तव्यं स्थानासनगतादिषु[7] ॥२६३॥

---

बहिः पार्ष्णिक्षेपाच्च पतनमाविद्धमूरोः वर्तनं। करण इति क्रियायां सत्यामित्यनेन पुनः पुनः पार्ष्ण्योः पतनम्। पादतलाग्रात्तु स्थानं च कर्तव्यमिति

---

१. GOS. सम्प्रयोजयेत्।
२. KSS. तथा दर्शन···।
३. KSS. कुञ्चनं।
४. KSS. विक्षेपं।
५. KSS. does not read it.
६. KSS., NS. सम्भ्रमादि।
७. NS. गमादिषु।

क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते।
तथा चोद्वाहितं [1]कुर्यादाविद्धगमनादिषु ॥२६४॥

ताण्डवेषु प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः।
इत्येतज्जङ्घयोः कर्म पादयोस्तु निबोधत ॥२६५॥

उद्घट्टितः समश्चैव तथाग्रतलसञ्चरः।
अञ्चितः [2]कुञ्चितश्चैव पादः पञ्चविधः स्मृतः ॥२६६॥

स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते।
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः ॥२६७॥

[3]अयमुद्वेष्टितकरणे त्वनुकरणार्थं प्रयोगमासाद्य।
द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः ॥२६८॥

स्वभावरचिते भूमौ समस्थाने च यो भवेत्।
[4]समः पादः स विज्ञेयः स्वभावाभिनयाश्रयः ॥२६९॥
[5]स्थिरस्वभावाभिनये नानाकरणसंश्रये।

चलितश्च पुनः कार्यो विधिज्ञैः[6] पादरेचिते ॥२७०॥
[7]समस्यैव यदा पार्ष्णिः पादस्याभ्यन्तरे भवेत्।
बहिः पार्श्वस्थितोऽङ्गुष्ठस्त्र्यश्रपादस्तु स स्मृतः ॥२७१॥
त्यक्त्वा (कृत्वा ?) समपदं स्थानमश्वक्रान्ते तथैव च।
स्याद्विक्लवादिष्वर्थेषु त्र्यश्रः पादो यथाविधिः ॥२७२॥
अस्यैव समपादस्य पार्ष्णिरभ्यन्तरे भवेत्।

---

दर्शयति। ऊर्ध्वकृतस्य घट्टनादुद्घट्टितः। उद्वेष्टितरूपं यत्करणमुद्वेष्टचन्ते यदङ्गुल्य इत्यादि तदेव बाहुकर्मभेदादवहुधा। तत्रास्य प्रयोग इति वर्तनाश्रयो विनियोगः। केचित्तु प्रयोगमासाद्यानुकरणार्थमप्यस्य प्रयोग इत्यूचुः यथा विक्रमोर्वश्यादौ पुरूरवःप्रभृतेः। एतेन नाट्यविषयो विनियोग उक्तः। अग्रणे तलेन च सञ्चरत इति ॥२६६॥

---

१. GOS. कार्यम्।
२. NS. कुञ्चितः सूचीपादः षोढा प्रकीर्तित।
३. KSS., NS. अयमुद्धनु‥ट्टितकरेणण्व।
४. GOS,. समपादः।
५. KSS स्थिरः स्वभाव।
६. KSS., NS. विक्षेपः।

७. KSS., NS do not read verses समस्यैव to संश्रयः।

त्र्यश्रपादः स विज्ञेयः स्थानकादिषु संश्रयः ॥२७३॥
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोऽङ्गुष्ठकस्तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वा [1]पादेऽग्रतलसञ्चरः ॥२७४॥

तोदननिकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे ।
विक्षेपविविधरेचक[2]पार्ष्णिकृतागमनमेतेन ॥२७५॥

पार्ष्णिर्यस्याञ्चिता भूमौ पादमग्रतलं तथा ।
अङ्गुल्यश्चाञ्चिताः सर्वाः स पादस्त्वञ्चितः स्मृतः[3] ॥२७६॥
[4]पादाग्रतलसञ्चारे वर्तितोद्वर्तिते तथा ।
[5]एष पादाहते कार्यो नानाभ्रमरकेषु च ॥२७७॥

उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
तथा कुञ्चितमध्यश्च स पादं कुञ्चितः स्मृतः ॥२७८॥

उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।
[6]उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थितः ॥२७९॥

वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ।
[7]नृत्ते नूपुरकरणे प्रयोगस्तस्य कीर्त्यते ॥२८०॥

---

तथा तोदनं प्रेरणम्, निकुट्टनं तदवग्रहणम्, स्थितं स्थानकादि, शुम्भनं पीडनं ताडनं हननम्, भ्रमणं मनसः, विक्षेपो भूतस्यापसारणम् । विविधरेचकः करपादरेचकः ।२७५। अञ्चिता इति प्रसृताः अञ्चितमुद्वर्तितं विदूषकादिगतौ ।२७६। भ्रमरी चारी, येषु प्रयोगेषु ते भ्रमरकाः ।२७७। सूचीं षष्ठं पादमन्ये पठन्ति । नूपुरस्य पादभूषणस्य करणे वन्धने । कट्यूरुजङ्घापादकर्मण्येव परव्यामिश्रीभूततावैचित्र्येण समुदिततया प्रयुज्यमानानि चारीत्युच्यन्ते । तत्समुदायस्य मण्डलभेदेन गतिर्निष्पद्यत इति कट्यादिपादान्तकर्मणैव चार्य उक्ताः । अत एव तासां विनियोगः पृथङ् नोक्तः ॥२८०॥

---

१. GOS. पादोऽग्रतलसञ्चरः ।
२. KSS., NS. पार्ष्णिक्षता ।
३. NS स पादोऽञ्चित उच्यते ।
४. NS. पादाग्रस्थितसंचारे ।
५. NS. अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ।
६. KSS. उत्क्षिप्तं ··· संस्थिता ।
७. NS. नृत्तेऽन्तःपुरकरणे ··· कीर्तितः ।

अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ।
पादजङ्घोरुकरणं कर्म कार्यं प्रयोक्तृभिः ॥२८१॥
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ।
यथा पादः प्रवर्त्तेत तथैवोरुः प्रवर्तते ॥२८२॥
[1]अनयोः समानकरणात् पादचारी प्रयोजयेत् ।
इत्येतदङ्गजं प्रोक्तं लक्षणं कर्म चैव हि ॥२८३॥
अतः परं प्रवक्ष्यामि चारीव्यायामलक्षणम् ॥२८४॥

[2]इति भरतीये नाट्यशास्त्रे अङ्गाभिनयो नाम नवमोऽध्यायः ।

---

समनन्तरं त्वध्यायत्रयं तद्वैचित्र्योदाहरणप्रदर्शनार्थमित्येतत्सर्वं मनसि कृत्वाह पादजङ्घोरुकरणमित्यादि । सममिति सह ।२८१। अत्र हुतु पादस्येति नाभिजङ्घारुकरणमित्यादिकर्मभ्योऽन्यत् पादकर्मेत्यर्थः ।

एतदेव स्फुटयति तथा पाद इति ॥२८२॥ अनयोरिति मध्ये अङ्गापि स्वीकृता अत्रैवं सर्वमाङ्गिकमियतैवोक्तमिति दर्शयति इत्येतदिति ॥२८३॥ अनन्तरवक्तव्यमासूत्रयति ।

अतः परमिति । चारीव्यायामा लक्ष्यन्ते उदाहरणतया येनेति शिवम् ॥ २८४ ॥

शिशिरतरकिरणकलिकाबङ्गारविभक्तिभक्तभङ्गुरतापः ।
अभिनवगुप्तो नवमाध्याये सन्देहताहमपनुदतति स्म ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद विवृतावभिनवभारत्यां आङ्गिकाध्यायो नवमः ॥

---

१. NS. तयोः ।
२. KSS. इति भरतीये नाट्यशास्त्रे शरीराभिनयो नाम दशमोऽध्यायः ।

# नाट्यशास्त्रम्

## अथ दशमोऽध्यायः

एवं पादस्य जङ्घाया ऊर्वोः[1] कट्यास्तथैव च ।
समानकरणे चेष्टा सा चारीत्यभिधीयते ॥१॥
[2]विधानोपगताश्चार्यो व्यायच्छन्ते परस्परम् ।
यस्मादङ्गसमायुक्तास्तस्माद्व्यायाम उच्यते ॥२॥
एकपादप्रचारो यः सा चारीत्यभिसंज्ञिता ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥३॥

---

## अभिनवभारती

निश्चलस्थितिमद्व्योमभूचारीसद्गतिप्रदः ।
सर्वदा ध्वनिमात्रात्मा शम्भुर्विजयतात् प्रभुः ॥

चारीव्यायामलक्षणमित्युक्तम् ॥१॥

तत्र समासे सन्देहः व्यायामशब्दार्थे च । चरेर्हि करणे भावे वा औणादिक इञ्, कृदिकारादक्तिन 'ङीष्' इति च चारीशब्दः प्रसिद्धार्थं इत्यभिप्रायेण सन्देहद्वयमपाकर्तुमाह— **विधानोपगता** इति । अन्योन्ययोजनापतिताश्चार्यो व्यायामशब्दस्यार्थ इति तात्पर्यम् । चार्य एव व्यायाम इति कर्मधारय इत्यर्थः । अस्यार्थस्तु अन्वर्थः व्यायच्छन्ते परस्परतया आपतन्ति इति । कुत्र नियम इत्याह—**परस्परमिति** । पूर्वा चारी परत्र नियता न तु पूर्वस्यामिति तेनाकर्मकत्वादात्मनेपदम् । परस्परोपपदाच्चेति कर्मव्यतिहारजमात्मनेपदं निषेधति, न तु आङो यमहन इति । ननु किं तन्नियमनमित्याह । **विधानोपगता** इति विधानेनैकस्या नियततेति अपरा उपगता बलादेवागता । नन्वेवमन्योन्याश्रयम् ? न, अङ्गेन प्रधानभूतेन केनचित्, सम्यगायुक्ताः प्रयुक्ताः प्रवर्तिता । यत्नायत्नापेक्षया बहुवचनम् । एतदुक्तं भवति— किंचिदङ्गं प्रधानं यत् संभवति यथा हस्तौ वा अभिनये, पादौ वा गतौ, तदा तदुपयोगिनी चारी प्रधानं, तच्चारीसंपत्त्युचिता च पूर्वा चारी आश्रीयते परया चेति परस्परनियमवत्यश्चार्यो व्यायाम इति ॥२॥

तत्र व्यायामस्य संक्षिप्तमध्यमविस्तीर्णतया भेदान्निरूपयति । **एकपादप्रचारो य** इति । एकाकिपादेन श्रोण्यादिप्रचारो व्याक्षिप्तः **द्विपादेति** । पादशब्देन तत्प्रचारः **नामेति** प्रसिद्धार्थम् । तुर्व्यायामप्रसिद्धादन्यदेवेदं संज्ञात्वेनाधुनैव नियम्यत इत्यर्थः । एष संक्षिप्तो व्यायामः अभिनयान्तरादौ ॥३॥

---

१. GOS. उरोः ।

२. KSS., NS. विधानोभयतः ।

करणानां समायोगः[1] खण्डमित्यभिधीयते ।
खण्डैः त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥४॥

चारीभिः प्रसृतं नृत्तं चारीभिश्चेष्टितं तथा ।
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥५॥

यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संज्ञितम् ।
नहि चार्या[2] विना किञ्चिन्नाट्येऽङ्गं संप्रवर्तते ॥६॥

तस्माच्चारीविधानस्य सम्प्रवक्ष्यामि लक्षणम् ।
या यस्मिंस्तु यथा योज्या नृत्ते युद्धे गतौ तथा[3] ॥७॥

---

करणानामिति बहुवचनात् त्रीणि तानि, "कपिञ्जलानालभेते" ति यथा । अन्यथा बहुत्वानियमे खण्डानां मण्डलेभ्यः क्व प्रविभागः । एष उपवृत्त्येधमानो मध्यमो व्यायामः, त्रिभिश्चतुर्भिरित्येतच्चतुरश्रतालाभिप्रायेण, वाग्रहणान्मिश्रणमपि सूचयन् सङ्ख्यातरमपि गृह्णीते । तथा हि—चतुर्थे सूचीविद्धाख्ये (११-२१) मण्डले तु याश्चारीर्वक्ष्यति । सूची वामपदं दद्यात् इत्यादि । सप्तमे त्वलाताभिख्ये —'भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् । षट्सङ्ख्यं सप्तसङ्ख्यं वा इति (११-३०) दशमेऽद्धर्चधिका (१०-१७) इति एवमन्यत्र ॥४॥

तत्र लौकिकत्वं तावच्चारीणां दर्शयति चारीभिरिति । नृत्तं वाऽङ्गहारात्मकं तच्चारीभिः प्रसृतं च व्याप्तमिति प्रत्येकं चेष्टितं गतिः शस्त्रमोक्ष इति । चक्रकुन्तादि-युद्धम् । युद्धे चेति, खङ्गहननादि युद्धे नियुद्धे च ॥५॥

प्रकृतेऽप्युपयोजयति—यदेतदिति । यच्छब्देन व्याख्यातधर्मपूर्वकं, एतच्छ-ब्देन व्याख्यास्यमानधर्मयोगं परामृश्यत इति विस्तीर्णतां नाट्यस्याह । किंचिदङ्गमिति शिरोहस्तादि, किंचिद्धि चार्या सह किंचित्पूर्वापरभावेन । संप्रवर्तत इति; खलत्वेन संवर्तते, अनित्यत्वेन प्रवर्तते, सम्यक् प्रवर्तते वा, इति यथा क्रियया वैकल्पिकोऽप्यु-पसर्गयोगः तथाङ्गेऽपि स्वीकारः, तत्त्वं निरूप्यत इति भट्टमित्राचार्यः ॥६॥

प्रकृताधिकारिखेदावहत्वाच्च न पदवाक्यवित्परिचिततप्रकटनमात्रलालसात्म-कमतिंरिति विरम्यते । लक्षणमिति उदाहरणम् । नृत्त इति यस्मिन्निति । "नपुंसक" मित्येकशेषः तथेति उक्तं, वक्ष्यते चेति शेषः । करणाङ्गहारादौ । तत्र नृत्ते उक्तं, युद्धे वक्ष्यते न्यायेषूह्यमिति शेषः, गतौ च द्वादशाध्याये वक्ष्यते इत्यध्यायत्रयस्यार्थ इह सूचितः ॥७॥

---

१. KSS. समायोगात् ।
२. NS. चार्यो ।
३. NS. reads it as तथा गतौ ।

समपादा स्थितावर्ता[1] शकटास्या तथैव च ।
अध्यर्धिका चाषगतिर्विच्यवा[2] च तथापरा ॥८॥
एडकाक्रीडिता बद्धा ऊरुद्वृत्ता तथाड्डिता ।
उत्स्पन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥९॥
समोत्सरितमत्तल्ली मत्तल्ली चेति[3] षोडश ।
एता भौम्यः स्मृताश्चार्यः शृणुताकाशिकीः पुनः ॥१०॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥११॥
डोलपादा तथाक्षिप्ता[4] आविद्धोद्वृत्तसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता[5] तथा ॥१२॥
मृगप्लुता च दण्डा[6] च भ्रमरी चेति षोडश ।
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥१३॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा स्मृता[7] चारी विज्ञेया स्थानसंश्रया ॥१४॥

---

तत्रोद्देशमाह—भौम्य एता इति । भूमौ भवा भौम्यः, एवमाकाशिक्य उपरिचरताम् । स्मृता इति वेदोदाहरणेऽत्र यावत्स्मर्यते तावद्व्युत्पादनार्थं शिष्टा । तैर्वक्तव्यम् तेनैतन्नाशङ्कनीयम् । यदि नेदं परिगणनं कियता भेदेनोक्तेति न तत्र स्पष्टम् । यल्लक्षणमन्वर्थं च तव्द्याक्रियते ॥८-१३॥

अथ समपादा—ननु समपादा कथं वा चारीत्याह—स्थानसंश्रयेति यदा समपाद एव स्थानान्तरं गच्छति तदा चरणाच्चारी भवत्येव योग्यतया तथा व्यपदेशादिति भावः ॥१४॥

अथ स्थितावर्ता – भूमिघृष्टेनेति । अग्रतलसञ्चरेणाभ्यन्तरमण्डलं द्वितीयपार्श्वजानुस्वस्तिकान्तं, पुनः शब्दो विशेषं द्योतयन् सन्निवेशयोगमाह । तेन स चेत्

---

१. KSS., NS. स्थिता वार्ता ।
२. KSS., NS. विच्यवाचा ।
३. KSS., चापि ।
४. KSS., NS. व्याविद्धोद्धृतसंज्ञिते । BHU. व्याविद्धोद्वृत्तसंज्ञिते ।
५. NS. भुजङ्गनासिता ।
६. BHU. दण्डपादा ।
७. GOS. तु सा ।

भूमिघृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सादयेदन्यं स्थितावर्त्ता[1] तु सा स्मृता ॥१५॥

निषण्णाङ्गस्तु चरणं प्रसार्य तलसञ्चरम् ।
उद्वाहितमुरः कृत्वा शकटास्यां[2] प्रयोजयेत् ॥१६॥

सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्यापसर्पणं[3] चैव ज्ञेया साध्यर्धिका बुधैः ॥१७॥

पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी च चाषगत्यां विधीयते ॥१८॥
[4]विच्यवात् समपादाया विच्यवां सम्प्रयोजयेत् ।
निकुट्टयंस्तलाग्रेण[5] पादस्य धरणीतलम् ॥१९॥

---

स्वस्तिकत्वेन श्लिष्टस्ततो द्वितीयमुत्सारयेत् स्वपार्श्वं कर्षयेदेकस्य स्थानमपरस्यामिति तथा ॥१५॥

अथ शकटास्या—निषण्णाङ्गस्त्विति । प्रयत्नधृतपूर्वकाय इत्यर्थः । शकटमसनीयं क्षेप्यं यया । एकस्मिन् पादे समेऽङ्गुल्यञ्चितं पक्षेतरं कृत्वा जानुनः कुञ्चने जङ्घा प्रसारणे च स्वपार्श्वे च त्र्यश्रितलसञ्चरस्थापनं तु निरोधनं रेचनमिवेति केचिदेनामाहुः । एतच्च लक्षणं लक्ष्यार्थासङ्गतमेव ॥१६॥

अथाध्यर्धिका सव्यस्येति दक्षिणस्य । पृष्ठत इति पार्ष्णिदेशे । तस्येति दक्षिणस्योपसर्पणे स्वपार्श्वार्धत्र्यश्रिततया स्थितिः । अव्यतिरेकेति अध्यर्धतालान्तरत्वादयो मन्तव्याः । एकस्य पूर्णा गतिरभ्यस्य पादस्य पूर्णार्धिकेत्यन्ये । करणप्राधान्याच्चैवमुक्तं वामस्यापि पृष्ठसङ्गतमेव ॥१७॥

अथ चाषगतिः सव्य इति सव्योऽपसर्पत्येव सर्वत्र प्रसारित इति तालमात्रमग्रतः पुनः स एवापसर्पितो द्वितालमात्रं पश्चान्नीतः, वामः सव्येन सहापसर्पति । किंचिदुत्प्लुत्य सव्यवामावपसर्पतः श्लिष्यतश्चेति सत्रासमपसर्पणादौ चाषस्येव गतिः चाषगतिः । सव्योपसर्पी चेत्यन्ये पठन्ति, तत्र सव्योसर्पशब्दयोः श्लिष्टत्वमपसर्पणं चार्थः ॥१८॥

अथ विच्यवा—पादस्येति पादयोरित्यर्थः ॥१९॥

---

१. NS., KSS. स्थिता वार्ता ।
२. KSS., शकटास्यं ।
३. KSS., NS. तस्योपसर्पणं BHU. तस्योपसर्पणे ।
४. KSS., NS. वीच्यवाक् समपादायां विच्यवां सम्प्रयोजयेत् ।
५. KSS., NS. तथाग्रेण ।

तलसञ्चरपादभ्यामुप्लुत्य पतनं तु यत् ।
पर्यायशच[1] क्रियते एडकाक्रीडिता तु सा ॥२०॥

अन्योन्यजङ्घासंवेधात् कृत्वा तु स्वस्तिकं ततः ।
उरुभ्यां वलनं यस्मात् सा बद्धा चार्युदाहृता ॥२१॥

तलसञ्चरपादस्य पार्ष्णिर्बाह्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्वृत्ता ऊरूद्वृत्तेति सा स्मृता ॥२२॥

अग्रतः पृष्ठतो वापि[2] पादस्तु तलसञ्चरः ।
द्वितीयपादो निर्घृष्टः यस्यां[3] स्यादड्डिता तु सा ॥२३॥

---

अथैलकाक्रीडिता=उत्प्लुत्य, किंचिदेकवारं, सक्थिगुल्फदेशेभ्यः पुनरुत्प्लुतिः अङ्गान्तरेणैवमिति पर्यायशः पतनं यत्र चार्या सा अजकागतितुल्यत्वादेड-काक्रीडिता ॥२०॥

अथ बद्धा—केवलयोरेवोर्वोर्वलनं स्थित एव जङ्घास्वस्तिक इति बद्धां केचिदाहुः। अन्ये तु स्वस्तिकापसरणेन पादतलाग्रयोर्मण्डलभ्रमणपूर्वकं यत् स्वस्व-पार्श्वगमनं तदूरुबन्धनमाहुः। जङ्घयोः संबन्धनादनुबद्धा ॥२१॥

अथोरूद्वृत्ता—अग्रतलसञ्चरस्य पादस्य संबन्धिनी पार्ष्णिर्द्वितीयपादपृष्ठभागो-न्मुखी यदा भवति जंङ्घा च तथा उद्वृत्ता तदा जानुनमनादाकुञ्चिता, द्वितीयजङ्घा-सम्मुखं वलनात्। ऊरोरूर्ध्वविवर्तनात् लज्जेर्ष्यादिविषया उरूद्वृत्ता। अन्ये तु पार्ष्णिर्द्वितीयपादाग्रतलसञ्चरबाह्योन्मुखीत्याहुः ॥२२॥

अथाड्डिता –अग्रत इति। अपिस्समुच्चये, वा पर्याये। तेन समस्थित एकोऽत्र-तलसञ्चरः पादः द्वितीयः क्रमादग्रे पृष्ठे च निर्घृष्टः श्लिष्टः कार्य इति अड्डिता, पादस्य स्वस्थानातिक्रमणात्। अड्डु अतिक्रमहिंसयोरित्यस्य इतचि रूपम् पठन्ति, सत्त्व च ॥२३॥

अथोत्स्पन्दिता—बाह्येन कनिष्ठाङ्गुलिभागेन अभ्यन्तराङ्गुष्ठभागेन निवर्तते चेदुभाभ्यां पादाभ्यां गमागमं कुरुते। किमवधीत्याह—पादरेचितस्यापसारम्, शोभा-

---

१. KSS., NS. पर्यायतः।
२ NS. चापि।
३. KSS., यत्र।

शनैः पादो निवर्तेत[1] बाह्येनाभ्यन्तरेण च ।
यद्रेचकानुसारेण सा चार्युत्स्यन्दिता स्मृता ॥२४॥
मुष्टिहस्तश्च वक्षःस्थः करोऽन्यश्च प्रवर्तितः ।
तलसञ्चरपादश्च जनिता चार्युदाहृता ॥२५॥
पञ्चतालान्तरं पादं प्रसार्य स्यन्दितां न्यसेत् ।
द्वितीयेन तु पादेन तथापस्यन्दितामपि ॥२६॥
तलसञ्चरपादाभ्यां[2] घूर्णमानोपसर्पणैः ।
[3]समोत्सरितमत्तल्ली व्यायामे समुदाहृताः ॥२७॥

---

पेक्षयोत्क्रान्तमस्याम् । यन्नद्याः प्रत्यावर्तनरूपस्पन्दितकृतं तत्तुल्यत्वादियमुत्स्पन्दिता । रेचकं नृत्तहस्तमत्र केचिदाहुः ॥२४॥

अथ जनिता—तलसञ्चरपादः प्रवर्तित इति । एतदेवास्याः स्वरूपं मुष्टेर्वक्षोगामित्वं हस्तान्तरस्य च प्रवर्तनमितिकर्तव्यतामात्रम् । समस्तगतीनामियं जननं करोति प्रारम्भरूपत्वादिति जनिता ॥२५॥

अथ स्यन्दितापस्यन्दिते - क्रमसमो निषण्णोरुः पादो दक्षिणस्तु पञ्चतालान् प्रसारितः 'अस्यैव दक्षिणं पादं पञ्चतालान् प्रसारितः । तालः स्मृतो मध्यमया इति । सा स्यन्दिता प्रसारणधर्मत्वात् । एतद्विपर्ययादपस्यन्दितेति । अङ्गविपर्ययाच्च लब्धाप्येषा प्रयोगे साहचर्यनियमख्यापनार्थं पुनर्निरूपिता । आलीढप्रत्यालीढयोस्तु पादद्वयमपि त्र्यश्रितसंस्थानं मण्डलजीवित्वं यद् वक्ष्यते मण्डलेन प्रयोजयेत् ।१०-६६। स्यन्दितायास्तु नैवमिति शेषः । स्थानस्य स्थितिप्रधानता चार्यास्तु गतिप्रधानतेत्यपि विशेषः ॥२६॥

अथ समोत्सरितमत्तल्ली—तलसञ्चरयोगेन जङ्घास्वस्तिकाभ्यन्तरे यदान्यस्य तदैव च द्वितीयतलसञ्चरं करोति ततो घूर्णमानयोस्तयोः उपसर्पणमित्यन्ये । समः अविकलः । अ अवनं रक्षणम् उत् ऊर्ध्वं सरितः गतिमान् समोत्सरितः । मदनं मत् तं मदं तनोतीति मत्तत् तस्य लयो गमनं यस्यामिति मत्तल्ली । सरितशब्दो रि गतौ इत्यस्मात् क्तप्रत्यये विन्यस्यते । सहेन समासे सादेशे च । मदनं मत् । तननं तत् । लयनं लीः । सर इति प्रातिपदिकात् इतचि वा सरितशब्दः । सम् आ उत् सरित इत्यन्ये पठन्ति । मदेन यो न विकलीभूतः रक्षार्थं चान्यतः पलायते तस्य वै द्विधा गतिरिति मध्यमदविषयेयं चारी सम्पद्यते ॥२७॥

---

१. KSS., NS, विवर्तेत ।
२. GOS. पादस्य ।
३. KSS., NS. समोत्तारित ।

उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्युदाहृता ॥२८॥
एता भौम्यः[1] स्मृताश्चार्यो [2]नियुद्धकरणाश्रयाः ।
आकाशकीनां चारीणां सम्प्रवक्ष्यामि लक्षणम् ॥२९॥

कुञ्चितं पादमुत्क्षिप्य पुरतः सम्प्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥३०॥

उरुभ्यां वलनं कृत्वा कुञ्चितं पादमुद्धरेत् ।
पार्श्वे विनिक्षिपेच्चैनमपक्रान्ता तु सा स्मृता ॥३१॥

कुञ्चितं पादमुत्क्षिप्य पार्श्वेनोत्पतनं[3] न्यसेत् ।
उद्घट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥३२॥

---

अथ मत्तल्ली—पादाभ्यामिति भूमिश्लिष्टाग्रतलाभ्यामिति जङ्घास्वस्तिकयोगेनार्धत्र्यश्रितभागाभ्यां घूर्णमानत्वेनापसर्पणाद्वा, अगाढमदविषया चारी मत्तल्ली ।२८।

नियुद्धकरणाश्रया इति । नियुद्धेऽनादिसिद्धा एताः, करणाङ्गहारेषु च तनो नाट्ये । स्मृता इत्यनेनोपवेदसंबन्धत्वेन वेदोऽत्र प्रमाणमिति दर्शितं विनियोगदिक्प्रदर्शनं चेदं मन्तव्यम् ॥२९॥

अथातिक्रान्ता—"उक्षिप्ता यस्य पार्ष्णिरिति" (९-२७७) कुञ्चितं तद् द्वितीयगुल्फक्षेत्रे कृत्वा किंचित् पुरतः प्रसार्य प्रकृतिभेदेन चतुस्तालान्तरमुत्क्षिप्याग्रेण भूमौ निपात्यत इति गन्तव्यातिक्रमादतिक्रान्ता ॥३०॥

अथापक्रान्ता—ऊरुभ्यां वलनोपलक्षितां (बद्धां) पूर्वं कृत्वा ततः पादमुद्धृत्य पार्श्वे क्षिपेदित्यपक्रमणादपक्रान्ता ॥३१॥

अथ पार्श्वक्रान्ता—कुञ्चितं पादं स्वपार्श्वेनोपरि नीत्वा भूमौ पार्ष्ण्या पातयेदिति पूर्वं कुञ्चनाद्बलादेवोद्घाटितत्वं भवति; तस्य हि लक्षणं "स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते" इति (९-२६६) । इयमेव पार्ष्णिचण्डघातेति प्रसिद्धा । अन्ये तु द्वितीयोरुक्षेत्रं यावदुत्क्षिप्योद्घाटितेन पातयेदित्याहुः ॥३२॥

---

१. KSS NS., भूम्यः ।
२. KSS, NS., नियुक्त ।
३. N.S, पार्श्वेत्थानगतिं । KSS. पार्श्वोत्थानोद्गतिं GOS. जानुस्तनसमं ।

कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ।
द्वितीयं च क्रमात्[1] स्तब्धमूर्ध्वजानुः प्रकीर्तिता ॥३३॥

[2]कुञ्चितं पादमुत्क्षिप्य जानूर्ध्वं सम्प्रसारयेत् ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥३४॥

पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु ।
द्रुतं निर्पातयेद्भूमौ चारी नूपुरपादिका ॥३५॥

कुञ्चितं पादमुक्षित्य[3]पार्श्वात्पार्श्वं तु दोलयेत् ।
पातयेदञ्चितं चैवं दोलपादा तु सा स्मृता[4] ॥३६॥

कुञ्चितं पादमुत्क्षिप्य आक्षिप्य[5] त्वञ्चितं न्यसेत् ।
जङ्घास्वस्तिकसंयुक्ता चाक्षिप्ता[6] नाम सा स्मृता[7] ॥३७॥

---

अथोर्ध्वजानुः—क्रमस्तब्धमिति यथा तस्योत्क्षेपस्तथास्य स्तब्धतेत्यर्थः ।३३।

अथ सूची—जानूर्ध्वं जानुपर्यन्तां जघां प्रसारयेत् । यदि वा जानोरुर्ध्वमूरुपर्यन्तां जङ्घां सकलां प्रसार्याग्रयोगेनापातयेदिति । सूच्याकारत्वात् सूची ॥३४॥

अथ नूपुरपादिका—पृष्ठत इति "पार्ष्णिर्यस्य स्थिता भूमौ" इत्यञ्चितं (९-२७५) कृत्वा तं पृष्ठतः स्फिक्पार्ष्णिश्लेषपर्यन्तं नीत्वा स्वपार्श्वेऽग्रतलेनाञ्चितां जङ्घां पातयेदिति । नूपुराणां झणज्झणिति शब्दजननात् त्वरितार्थत्वमनया भवति नूपुरयोजनं चेति तथोक्ता ॥३५॥

अथ दोलपादा—उत्क्षिप्येति दक्षिणक्षेत्रान्तं स्वपार्श्वं निनीय ततोऽपि स्वपार्श्वं दोलयेदिति दोलाकारेण नयेत्, ततः स्वपार्श्वे पार्ष्ण्या निपातयेत् ॥३६॥

अथाक्षिप्ता—आक्षिप्येति । अग्रतस्त्रितालोत्क्षेपादर्धमण्डलवत् पार्श्वान्तरं नीत्वा स्वस्तिकेन पार्ष्ण्या भुवि पातयेत् ॥३७॥

---

१. GOS क्रमः ।
२. KSS. does, not read this verse. NS. reads it after पृष्ठतो etc.
३. KSS., NS. पार्श्वं ।
४. GOS., NS. प्रकीर्तिता ।
५. NS. व्याक्षिप्य KSS. व्याक्षिप्यं चाञ्चितं ।
६. NS. प्रक्षिप्ता KSS. उत्क्षिप्ता ।
७. KSS. भवेत् ।

स्वस्तिकस्याग्रतः पादः कुञ्चितस्तु[1] प्रसारितः ।
निपतेदञ्चिताविद्ध[2] आविद्धा नाम सा स्मृता ॥३८॥

पादमाविद्धमावेष्ट्य समुत्क्षिप्य निपातयेत् ।
परिवृत्य द्वितीयं च सोद्वृत्ता चार्युदाहृता ॥३९॥

पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥४०॥

[3]पृष्ठः प्रसारितः पादो वलितोऽभ्यन्तरीकृतः ।
पार्ष्णिप्रपतितश्चैव ह्यलाता सम्प्रकीर्तिता[4] ॥४१॥

कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं विवर्त्तयेत् ।
कटिजानुविवर्त्ताच्च भुजङ्गत्रासिता भवेत् ॥४२॥

---

अथाविद्धा—विश्लिष्टजङ्घस्यैव स्वस्तिकस्य संबंधी कुञ्चितः पादः प्रसारितः तत आविद्धस्सन् स्वपार्श्वे द्वितीयपार्ष्णेः क्षेत्रे पार्ष्ण्यां पातितः कार्यः ॥३८॥

अथोद्वृत्ता—आविद्धमिति आविद्धचारीसम्बन्धिनं कुञ्चितमित्ययनेन आविद्धाशेषभूतेयमिति दर्शयति । आवेष्टनं द्वितीयोरुक्षेत्रगपार्ष्णित्वम् । तमेव पाद-मुत्प्लुत्य भ्रमरकं कृत्वा पातयेत् । ततो द्वितीयमित्यूर्ध्वं वर्तमानत्वादुद्वृत्ता ॥३९॥

अथ विद्युद्भ्रान्ता—पृष्ठत ऊरुमूलादिति केचित् । उपाध्यायास्तु पृष्ठतः पार्श्वात् पश्चाद् भागे वलितं कृत्वा शिरः संश्लेषात् तद्द्वारेण सर्वत उर्ध्वाधः पार्श्वेषु मण्डलवद् भ्रमितं प्रसारयेदिति विद्युद्भ्रान्ता ॥४०॥

अथालाता – पूर्वं पश्चाद्भागे प्रसारितस्ततो वलनेनाभ्यन्तरीकृतो द्वितीयोरुदेशा दभिमुखतलं च नीतः, ततः स्वपार्श्वपार्ष्ण्यां पातित इति अलातचक्राकृतिरलाता ॥४१॥

अथ भुजङ्गत्रासिता—द्वितीयोरुमूलक्षेत्रान्तं कुञ्चितमुत्क्षिप्य कटिजानु निवर्तनेन नितम्बसम्मुखपार्ष्णित्र्यश्रमूरुं विवर्तयेत् । स्वपार्श्वगजानुकमुत्तानपादतलं कुर्यादिति पादोपान्तभुजगभयभावितगतिसादृश्याद् भुजङ्गत्रासिता ॥४२॥

अथ हरिणप्लुप्ता—अतिक्रान्तचार्युक्तकुञ्चितं पादमुत्क्षिप्योत्प्लुत्य च तमेव

---

१. NS. च ।
२. GOS. ताविद्धमाविद्ध ।
३. NS. पृष्ठतः सर्वतः पादो वलिताऽभ्य...। GOS. पृष्ठप्रसारितः ।
४. KSS. सा प्रकीर्तिता ।

अतिक्रान्तक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता सा ज्ञेया हरिणप्लुता[1] ॥४३॥

नूपूरं चरणं कृत्वा पुरतः सम्प्रसारयेत् ।
क्षिप्रमाविद्धकरणं दण्डपादा तु सा स्मृता ॥४४॥

अतिक्रान्तक्रमं कृत्वा त्रिकं तु परिवर्त्तयेत् ।
द्वितीयपादभ्रमणात्तलेन[2] भ्रमरी स्मृता ॥४५॥

आकाशिक्यः स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
धनुर्वज्रा[3]सिशस्त्राणां प्रयोक्तव्या[4] प्रयोक्तृभिः ॥४६॥

अग्रगौ पृष्ठगौ[5] वापि [6]ह्यनुगौ चापि योगतः ।
पादयोस्तु द्विजा[7] हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥४७॥

---

पातयेत् । तदनन्तरं द्वितीया जङ्घा अञ्चितपादा सती पृष्ठभागे पश्चाद्देशे क्षिप्ता कार्येति मृगप्लुतितुल्या, 'सन्धि होदु' इत्यादौ विदूषकादेर्दृश्यते ।४३।

अथ दण्डपादा—नूपूरपादोक्तं कुञ्चितं पादं द्वितीयपार्ष्णिग्रं कृत्वाग्रतः प्रसारयेत्; कथं, क्षिप्रं कृत्वा तथा आविद्धकरणं, आविद्धस्वदेहक्षेत्रसम्मुखीकृत-जान्वग्रात् क्रिया यत्र । ऊरुजानुजङ्घस्य स्तब्धत्वेन दण्डाकारत्वाद् दण्डपादा ॥४४॥

अथ भ्रमरी—अतिक्रान्तचार्युक्तं कुञ्चितं पादमुत्क्षिप्य भुजङ्गत्रासितवत् त्र्यश्रमूरूं विवर्त्य द्वितीयपादतलभ्रमणे त्रिकं परिवर्तयेदिति सर्वशरीरपरिवर्तनद्वारेण नेमिभ्रमणाद् भ्रमरी ॥४५॥

इतिकर्तव्यताशेषं विनियोगादिकं चासां दर्शयति—ललिताङ्गक्रियात्मिका इति धनुर्वज्रेत्यादि च ॥४६॥

अथ कायशोभां निरूपयन् व्यापकविनियोगं चारीणां दर्शयति—अग्रगावित्यादि । इदं तात्पर्यम्—इह कदाचिद्गतेः प्राधान्यं, कदाचिद्धस्तव्यापारस्य, कदाचिद् द्वयोः । आद्ये पक्षे पादविक्षेपस्यानुगौ तदनुसारिणौ तत्पश्चाद्भाविनौ च हस्तौ, द्वितीये हस्तव्यापारस्यानुसारेण पश्चाद्भावेन च पादौ, तृतीये द्वयोरपि तुल्यकालताविनियोगपारतन्त्र्येण च प्रवृत्तिः । योग औचित्यम् ॥४७॥

---

१. NS. हरिणीप्लुता ।
२. NS. चलने ।
३. KSS. NS. वज्रादि ।
४. NS. योक्तव्याः ।
५. KSS. समगौ ।
६. KSS. Omits हि ।
७. KSS. द्विजहस्तौ ।

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गमं [1]ज्ञात्वा तथोपाङ्गानि योजयेत् ।४८॥

पादचार्यां यथा पादो धरणीमेव गच्छति ।
एवं हस्तश्चरित्वा[2] तु कटिदेशं समाश्रयेत् ॥४९॥

एताश्चार्यो[3] मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्थानान्यासां प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ।।५०।।

वैष्णवं समपादं च वैशाखं मण्डलं तथा ।
प्रत्यालीढं[4] तथालीढं स्थानान्येतानि षण् नृणाम् ।।५१।।

द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समस्थितस्त्वेकः त्र्यस्रः पक्षस्थितोऽपरः[5] ।।५२।।

---

कायशोभायोजनायेह अग्रे चात्राध्याये चार्यः प्रस्तुताः (१०-७३) इति तत्प्राधान्यं यदा भवति तदा योजना कीदृशी कार्येति स्पष्टयितुमाह—यतो हस्त इति । तथेति तेनैव प्रकारेण, उपाङ्गानि भ्रूनेत्रादीनि ।।४८।।

ननु हस्तस्य क्रियायां यदि पादस्य गतिक्रिया तर्हि तद्विश्रान्तौ हस्तस्य को वृत्तान्त इत्याशङ्क्याह– पादचार्यामिति समाप्तायामिति शेषः । एवकारोऽप्यसंभावनां निरस्यति । हस्त इति ।।४९।।

अर्धचन्द्रो नाट्ये, नृत्ते तु पक्षप्रद्योतौ पक्षवञ्चितावपि । पादस्य धरणीप्राप्तौ कीदृक् कायसन्निवेश इत्याशयेन स्थानकान्यभिधित्सुः पूर्वोपसंहारपूर्वकं प्रतिजानीते—एताश्चार्य इति । ललितत्वमङ्गस्य यत इयतीभिरेव इमा उत्तानत्वे । तावानेव गतिप्रकार इति यावत् । स्थानानि भावे करणेऽधिकरणे वा व्युत्पत्त्या कायसन्निवेशाश्चार्यो उच्यन्ते । सर्वशस्त्रविमोक्षण इति साधारणो विनियोग उक्तः । आसामपि चारीणां पूर्वं गतिरूपत्वं, गतेश्च पश्चाद्भाविनी स्थितिरिति भावः ।।५०।

नृणामिति स्थानकानि तु निरूपयिष्यन्त इत्यर्थः ।५१। पक्षस्थित इति पार्श्वाभिमुखाङ्गुलिः । त्र्यश्र इति किंचिदग्राभिमुख्यमस्पृशत् ।५१-५२। अञ्चिता कुटिला

---

१. NS. निर्गतिं ।
२. KSS., NS. हस्तं चरित्वा ।
३. KSS. एताश्चार्या ।
४. KSS. प्रत्यालीढमथालीढं ।
५. NS., KSS. त्र्यस्रपादस्थितोऽपरः ।

किञ्चिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवं स्थानमेतद्धि विष्णुरत्रा[1]धिदैवतम् ।।५३।।

स्थानेनानेन कर्त्तव्यः संल्लापस्तु स्वभावजः ।
नानाकार्यान्तरापेतैर्नृभिरुत्तममध्यमैः ।।५४।।

[चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा ।
धैर्यदानाङ्गलीलासु तथा क्रोधे प्रयोजयेत् ।।५५।।

इदमेव विपर्यस्तं प्रणयक्रोध इष्यते ।
उपालम्भकृते चैव [2]प्रणयोद्वेगयोस्तथा ।।५६।।

शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये चपलतायोगे गर्वाभीष्टेषु[3] शक्तिषु ।।५७।।

शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् ।]
समपादे समौ पादौ तालमात्रान्तरस्थितौ ।।५८।।

स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन विप्रमङ्गलधारणम् ।।५९।।

रूपणे पक्षिणां चैव वरं[4] कौतुकमेव च ।
स्वस्थानां स्यन्दनस्थानां विमानस्थायिनामपि ।।६०।।

---

जानुनमनाज्जङ्घा यत्र । सौष्ठवे यदङ्गं वक्ष्यते तेन पुरस्कृतं पूजितम्, अप्रधाने वा अङ्गे सौष्ठवं पुरस्कृतं प्रधानम् । हि यस्मात् विष्णुरत्राधिदैवतम् तस्माद्वैष्णवम् । तेन तस्य तादृशस्य वाऽस्त्रीप्रधानस्य सूत्रधारादेः प्रयोगे स्थानकमिदम् । एवमुत्तरत्र मन्तव्यम् ।५३। एतदेवाह—स्थानेनानेनेति स्वभावजः अनावेशितः ।५४। विप्रमङ्गलेति विप्रैः क्रियमाणं यन् मङ्गलाशीर्वचनादि तस्य धारणं प्रतीप्सन् ।५९। खस्थादीनामिदं स्थानकम् ।६०। लिङ्गस्थाः शैवाद्याः व्रतस्था उर्ध्वकायादिप्रतताङ्गाः.

---

१. NS. रेवाधि…।
२. KSS., NS. प्रकर्षाधिवलस्तथा ।
३. NS. मन्त्राधिक्येषु ।
४. NS. परम् ।

लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत् ।
तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ॥६१॥

तालांस्त्रीनर्धतालांश्च निष्षणोरुं प्रकल्पयेद् ।
त्र्यस्रौ वक्षःस्थितौ चैव तत्र पादौ प्रयोजयेत् ॥६२॥

वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ।
स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः ॥६३॥

व्यायामनिर्गमश्चैव स्थूल[1]पक्षिनिरूपणम् ।
शराणां च समुत्क्षेपो व्यायामकरणे तथा ॥६४॥

रेचकेष च कर्तव्यमिदमेव प्रयोक्तृभिः ।
ऐन्द्रे तु मण्डले पादौ चतुस्तालानान्तरस्थितौ ॥६५॥

त्र्यस्रौ [2]पक्षःस्थितौ चैव कटिजानू समौ तथा ।
धनुर्वज्रासिशस्त्राणि मण्डलेन प्रयोजयेत् ॥६६॥

वाहनं कुञ्जराणां[3] तु स्थूलपक्षिनिरूपणम् ।
अस्यैव दक्षिणं पादं पञ्च तालान् प्रसार्य तु ॥६७॥

आलीढं स्थानकं कुर्याद् रुद्रश्चात्राधिदैवतम् ।
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत् ॥६८॥

उत्तरोत्तरसंजल्पो रोषामर्षकृतस्तु यः ।
मल्लानाञ्चैव संफेटः शत्रूणां च निरूपणम् ॥६९॥

---

।६१। किंचत्याकाशदेश इत्याह—तालास्त्रयोऽर्धतालाश्चेति सार्धतालत्रयादधो नभोदेश इत्यर्थः । निषण्णावचलौ विश्रान्तौ तु उरू यत्र सूच्यपेक्षया ।६२। विशाखः स्कन्दः । व्याप्याङ्गानामेव युद्धादौ निर्गमनात् तेषामेव वेगादानपार्ष्णिचोदनाक्रमेण ।६३-६४। ऐन्द्रे त्विति शेषं द्योतयन् सार्धतालद्वयान्तरनभोदेशनिषण्णोरुत्वमत्रापि सूचयति ।६५। मण्डलेश्वरविषयत्वान्मण्डलम् ।६६। अश्वानां वाहने वैशाखं, इदं तु हस्तिनां, तेभ्यः स्थूलानामिति प्रक्रमात् स्थूलाः पक्षिणोऽत्र गरुडादयो मन्तव्याः ।

अस्यैवेति निषण्णोरुत्वं तथा त्र्यश्रत्वं द्वयोः सूचयति ।६७। आसमन्ताल्लीढ़ा स्पृष्टा भूमिर्येनेत्यालीढ़म् ।६८। संफेटः संघर्षः ॥६९॥

---

१. NS. पक्ष ।
२. KSS., NS. वक्षः ।
३. NS. कुञ्जरादीनां ।

तथाभित्रवणं चैव शस्त्राणां चैव मोक्षणम् ।
कुञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च ।।७०।।

आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ।
आलीढसंहितं शस्त्रं प्रत्यालीढेन मोक्षयेत् ।।७१।।

नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ।
न्यायाच्चैव हि विज्ञेयाश्चत्वारः शस्त्रमोक्षणे ।।७२।।

भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः ।
भारते तु कटीच्छेद्यं पादच्छेद्यं तु सात्वते ।।७३।।

वक्षसो वार्षगण्ये तु शिरश्छेद्यन्तु कैशिके ।
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारीसमुत्थितैः ।।७४।।

प्रविचार्यं प्रयोक्तव्यं नानाशस्त्रविमोक्षणे ।
न्यायाश्रितै रङ्गहारैर्न्यायाच्चैव समुत्थितैः ।।७५।।

यस्माद् युद्धानि वर्तन्ते[1] तस्मान् न्यायाः प्रकीर्तिताः ।
वामहस्ते विनिक्षिप्य खेटकं शस्त्रफेटकम् ।।७६।।

शस्त्रमादाय हस्तेन प्रविचारमथाचरेत् ।
प्रसार्य च करौ सम्यक् पुनराक्षिप्य[2] चैव हि ।।७७।।

---

आलीढ़परिवर्त इतीयदेव लक्षणं पूर्वमुक्तम्, तु पदं इतिकर्त्तव्यतास्पष्टकरणार्थम् ।७०। कुञ्चितमिति प्रसारणविपरीतं भूय उत्तानाकुञ्चितोऽत्र पादः ।७१। ननु प्रयोक्तृभिः शस्त्रविमोक्षः कार्य इत्युक्तम् । तस्य (प्रयोक्तृभिः ? (न्यायात्यादि?) व्यायामाच्चेति नामानुसारादेषां वृत्तिविभागे परिशेषता । आरभटया वार्षगण्यः ।७२। कटिच्छेद्य-मिति भावे कृत्यः । कटीस्थानादिषु परस्य हन्तव्येष्वतिक्रमेण चत्वारः ।७३। एभिरिति एभिर्न्यायैरुपलक्षिताः ।७४। शस्त्रमोक्षणाविषयाः प्रविचाराः प्रकृष्टाः विचित्रा चारा गतिविशेषाः । (परिश्रान्तिशब्दाः?) प्रयोक्तव्याः चारीव्यायामकरण-खण्डमण्डलात्मकाः कार्याः ।।७५।।

न्यायशब्दस्यार्थं दर्शयति न्यायाश्रितैरिति न्यायेनाङ्गौचित्येन यान्यङ्गो-दाहरणादि न्यायादेव च परबन्धनस्वभाविताप्तिरूपात् प्रवर्तितानि तैः यत एतयोः क्रिया अतो न्यायाख्याः । ७६। अथापि चेत्यनन्तरं चेत्यर्थः ।७७। परिवेष्टनेन गमनं

---

१. NS. नीयन्ते ।
२. NS. पुनरावर्त्य ।

खेटकं भ्रामयेत् पश्चात् पार्श्वात् पार्श्वमथापि च ।
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ।।७८।।
[1]कपोलस्यान्तरे वापि[2] शस्त्रस्योद्वेष्टनं[3] तथा ।
पुनश्च खड्गहस्तेन ललितोद्वेष्टितेन[4] च ।।७९।।
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ।
एवं प्रचारः कर्तव्यो भारते शस्त्रमोक्षणे ।।८०।।
शात्वते च प्रवक्ष्यामि प्रविचारं यथाविधिः ।
स एव प्रविचारस्तु खड्गखेटकयोः स्मृतः ।।८१।।
केवलं पृष्ठतः शस्त्रं कर्तव्यं खलु सात्वते ।
गतिश्च वार्षगण्येऽपि सात्वतेन क्रमेण तु ।।८२।।
[6]शस्त्रखेटकयोश्चापि भ्रमणं संविधीयते ।
शिरः परिगमस्तद्वच्छस्त्रस्येह भवेत्तथा[6] ।।८३।।
उरस्युद्वेष्टनं कार्यं शस्त्रस्यांशेऽथवा पुनः ।
भारते प्रविचारोऽयं कर्तव्यः स तु कैशिके ।।८४।।
विभ्रमय्य[7] तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ।
प्रविचारा प्रयोक्तव्या[8] ह्येवमेतेऽङ्गलीलया ।।८५।।
धनुर्वज्रासि[9]शस्त्राणां प्रयोक्तव्या विमोक्षणे ।
न भेद्यं नापि तु च्छेद्यं न चापि रुधिरस्रुतिः ।।८६।।

---

नयनं परिगमः।७८। मणिबन्धोद्वेष्टनेन शस्त्रस्योद्वेष्टनम् । उद्वेष्टिनेति उद्वेल्लितेनेति ।७९। पृष्ठत इति कायस्य पश्चाद्भागे ।८२। युद्धप्रसङ्गेन सर्वं प्रयोज्यमापततीत्याशङ्क्याह—न भेद्यमिति भावे प्रत्ययः ।८६। संज्ञामात्रेणेति। यथा परो जानाति युध्येते इमाविति एवं त्विमावित्यादिविषयं निधाय नाटकादौ संज्ञामात्रेणापि; तेन

---

१. NS. कपोलांसान्तरे ।
२. NS. KSS. चापि ।
३. NS. घटनं ।
४. NS. वर्तितेन ।
५. NS. खड्ग ।
६. NS. शिरः परिगमादस्मिस्तस्य शस्त्रस्य केवलम् ।
७. NS. विभ्रमश्च ।
८. KSS. कर्त्तव्या ।
९. KSS. वज्रादि ।

रङ्गे प्रहरणे कार्यो न चापि व्यक्तघातनम् ।
[1]संज्ञामात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः ॥८७॥

अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ।
[2]अङ्गसौष्ठवसंयुक्तैरङ्गहारैर्विभूषितम् ॥८८॥

व्यायामं कारयेत् सम्यक् लयतालसमन्वितम् ।
सौष्ठवे हि प्रयत्नस्तु कार्यो व्यायामसेविभिः ॥८९॥

सौष्ठवे लक्षणं प्रोक्तं वर्तनाक्रमयोजितम् ।
शोभा सर्वैव नित्यं हि सौष्ठवं समुपाश्रिता ॥९०॥

अचञ्चलमकुब्जं चासन्नगात्रमथापि[3] च ।
नात्युच्चं चलपादञ्च[4] सौष्ठवाङ्गं प्रयोजयेत् ॥९१॥

कटी कर्णसमा यत्र कूर्परांऽसशिरस्तथा[5] ।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥९२॥

नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ।
अत्र नित्यं प्रयत्नो हि विधेयो मध्यमोत्तमैः ॥९३॥

नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ।
कटीनाभिचरौ[6] हस्तौ वक्षश्चैव समुन्नतम् ॥९४॥

---

नानुचितमिति दर्शयति ।८७। अथवेति व्यवस्थितविकल्पः ।८८। अङ्गसौष्ठवं यदुक्तं तस्य सिद्धये परिकरमाह—व्यायाममिति । व्यायामोऽङ्गशिक्षाभ्यासव्यासङ्गयोग्यकाल-एव । एवं द्रुतादेः । चञ्चत्पुटादेश्चानुसन्धेरङ्गमात्रगीकृतन्तालाख्यं पठ्यते ।८९। सन्नं स्वविश्रान्तिपरिणतं गात्रं यस्य ।९१। कूर्परांसशिर इति प्राण्यङ्गत्वादेकवद्भावः । तथेति साम्येनेत्यर्थः ।९२। अधमानामत्र स्वातन्त्र्यं दर्शयति मध्यमोत्तमैरिति ।९३। सौष्ठवं यदर्थं तत्सर्वसामान्यभूतं चातुरश्रयमाह—कटिनाभिचराविति क्रमेण यौग-पद्येन च ।९४। खड्गयुद्धे यथान्यायास्तथा धनुर्युद्धेऽपि कर्माणि सन्तीति दर्शयति

---

१. NS. प्रहरणं KSS. रङ्गप्रहरणे कार्यं ।
२. NS. राज्ञा ।
३. NS. सन्नगात्रं तथैव च ।
४. NS. चलपातं ।
५. KSS. कूर्परोऽस्थितस्तथा ।
६. NS. वरौ ।

वैष्णवं स्थानमित्यङ्ग[1] चतुरस्रमुदाहृतम् ।
परिमार्जनमादानं सन्धानं मोक्षणं तथा ॥९५॥

धनुषस्तु प्रयोक्तव्यं करणं तु चतुर्विधम् ।
[2]संमार्जनं परामर्श आदानं ग्रहणं क्रिया ॥९६॥

सन्धानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ।
तैलाभ्यक्तेन गात्रेण यवागूमृदितेन च ॥९७॥

व्यायामं कारयेत् श्रीमान् भित्तावाकाशिके तथा ।
योग्यायां मातृका भित्तिस्तस्माद्भित्तिं समाश्रयेत् ॥९८॥

भित्तौ प्रसारिताङ्गन्तु व्यायामं कारयेन्नरम् ।
बलार्थं च निषेवेत नस्यं बस्तिविधिं तथा ॥९९॥

स्निग्धान्यन्यानि च तथा रसकं पानकं तथा ।
आहारेऽधिष्ठिताः प्राणा प्राणे योग्याः प्रतिष्ठिताः ॥१००॥

तस्माद्योग्याप्रसिध्यर्थमाहारे यत्नवान् भवेत् ।
अशुद्धकायं [3]प्रक्लान्तमतीवक्षुत्पिपासितम् ॥१०१॥

---

प्रमार्जनमिति प्रथमं धनुषो मार्जनं ततोऽपि बाणस्य ग्रहस्ततोऽपि शरस्य सन्धानं ततो मोक्षः ।९६। व्यायामे प्रस्तुते तदुपयोगि सौष्ठवं तत्प्रसङ्गगतं च धनुः कर्माभिधाय प्रयोगमेव व्यायाममाह— तैलाभ्यक्तेनेति । तैलमत्र तिलतैलम् । यवागूर्यवान्नम् ।९७। योगाय विद्याविशेषसम्बन्धाय प्रभवतीति योग्या गुणनिका ।९८। नस्यं वस्तिविधिश्च तैलघृतादिभिः यथादेशकालप्रकृतीति मन्तव्यमायुर्वेदात् ।९९। रसकमिति मांसरसं सवेतेति संवन्धः । पानकानि च स्निग्धानीति सम्बन्धः । योग्या वा । किमनेनेत्याशङ्क्याह—आहाराधिष्ठिता इति ।१००। अशुद्धकायमित्यनेन वमनविरेचनविशुद्धगात्रस्य व्यायामेऽधिकार इति दर्शयति । अशुद्धगात्रत्वं चाजीर्णयोगेऽपि । प्रक्लान्तमिति अध्वश्रमादिना ।१०१। अचलैरिति यत्र यत्र क्रियायां योज्यते तत्र

---

१. NS. त्यङ्गचतुरस्र··· ।

२. GOS. प्रमार्जनं ।

३. NS. प्रक्लान्तमधीरं ।

अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ।
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ॥१०२॥
व्यायामं कारयेद्धीमान् नरमङ्गक्रियात्मकम् ।
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ॥१०३॥
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ।

इति भरतीये नाट्यशास्त्रे चारीविधानो नाम
दशमोऽध्यायः ।

---

तत्रैव प्राप्तपरिणतिभिरित्यर्थः । मधुरैरिति ललितैः ।१०२। अङ्गक्रिया अङ्गसिद्धिः । एवमित्युपसंहरन्नध्यायान्तरमासूत्रयति । विकल्पनं विचित्रतया कल्प्यन्ते येन प्रकारेण तं वक्ष्यामीति सूत्रयन्नङ्गानुसारायातचारीपरम्परात्मनां मण्डलात्मनामसङ्कीर्णत्वं सूत्रयन्नुदाहरणमात्रार्थमध्यायान्तरमिति निरूपयतीति शिवम् ।१०३।

इत्थं दशममध्यायं व्याचष्टे स्म समासतः ।
शिवस्मृतिकृतार्थोऽपि परार्थं दुःखलात्मजः ॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेद-
विवृतावभिनवभारत्यां चारीविकल्पो नाम दशमोऽध्यायः ।

---

# नाट्यशास्त्रम्

[1]अथ एकादशोऽध्यायः ।

एवाश्चार्यो मया प्रोक्ता यथावच्छस्त्रमोक्षणे ।
चारीसंयोगजानीह मण्डलानि निबोधत ॥१॥
अतिक्रान्तं विचित्रं च तथा ललितसञ्चरम् ।
सूचीविद्धं [2]दण्डपादं विहृतालातके तथा ॥२॥
वामबन्धं सललितं क्रान्तञ्चाकाशगामि च ।
[3]मण्डलानि द्विजश्रेष्ठाः ! भूमिगानि निबोधत ॥३॥
भ्रमरास्कन्दिते स्यातामावर्तं च ततः परम् ।
समाक्रन्दितमप्याहुरेडकाक्रीडितं तथा ॥४॥
अड्डितं शकटास्यं च तथाऽध्यर्धकमेव च ।
पिष्टकुट्टं च विज्ञेयं तथा चाषगतं पुनः ॥५॥
एतान्यपि दशोक्तानि भूमिगानीह नामतः ।
आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् [4] ॥६॥
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम् ।
सूचीवामं पुनश्चैव पार्श्वक्रान्तं च दक्षिणम् ॥७॥

---

अभिनवभारती

गतिमण्डलवैचित्र्यमासूत्रयति या सदा ।
तथा नेविष्ठनिर्मात्रीं शक्तिं वन्दे महेशितुः ॥
स्वल्पेऽपि पाठ्ये न त्याज्यः कोऽध्यायो मया यतः
विभोर्विश्वात्मनः स्तोत्रं मुख्यमन्यत्प्रसङ्गतः ॥

शस्त्रमोक्षणे मण्डलानीति सम्बन्धः । इहेत्यस्मिन्नध्याये श्रुते श्रुततद्दिशान्यान्यपि निबोधत, । एषामियत् सामान्यलक्षणं चारीसंयोगजानीति ।

आकाशगतानां युद्धपरिक्रमेषु प्राधान्यात्पूर्वमुद्देशः आकाशभूचारीप्राचुर्यान्मण्डलेषु तथात्वम् ।१-५। आद्यमिति दक्षिणम् । उद्वाहितमिति लक्षणैकदेशेन शकटास्यां

---

१. KSS. द्वादशोऽध्यायः ।
२. KSS. NS. दण्डपादविहृत...
३. KSS. NS. do not read.
४. KSS. आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत् ।

सूचीं वामक्रमं दद्यादपक्रान्तं च दक्षिणम् ।
[1]सूचीवामं पुनश्चैव त्रिकं च परिवर्तयेत् ॥८॥

तथा दक्षिणमुद्वृत्तमलातञ्चैव वामकम् ।
परिच्छन्नं तु कर्त्तव्यं बाह्यभ्रमरकेण हि ॥९॥

अतिक्रान्तं पुनर्वामं दण्डपादञ्च दक्षिणम् ।
[2][विज्ञेयमेतद् व्यायामे त्वतिक्रान्तं तु मण्डलम् ॥१०॥

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् ।
आस्पन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम् ॥११॥

वामं सूचीपदं दद्यादपक्रान्तञ्च दक्षिणम् ।
भुजङ्गत्रासितं वाममतिक्रान्तं च दक्षिणम्] ॥१२॥

[3]उद्वृत्तं दक्षिणं चैवाऽलातं[4] चैवात्र वामकम् ।
पार्श्वक्रान्तं पुनः सव्यं सूचीवामक्रमं तथा ॥१३॥

विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम् ।
[बाह्यभ्रमरकञ्चैव विक्षेपञ्चैव योजयेत्][5] ॥१४॥
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ।
कृत्वोर्ध्वजानुचरणमाद्यं सूचीं प्रयोजयेत् ॥१५॥
अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् ।
वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्तयेत् ॥१६॥
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तश्च वामकम् ।
सूचीवामक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ॥१७॥

---

सूचयति। एवमन्यत्र ।६। त्रिकमिति भ्रमरीमाह ॥८॥

बाह्यभ्रमरकेण वामपादेन ।९। आस्पन्दितमिति स्पन्दिताञ्चारीमाह, तामेवान्ये आस्कन्दितेत्याहुः ॥११॥

---

१. KSS. NS., सूची पादं ।
२. KSS., NS. do not read this verse.
३. NS. उद्धृतं ।
४. NS. ह्यलातं ।
५. NS. does not read.

पार्श्वक्रान्तं [1]पुनश्चाद्यमतिक्रान्तं च वामकम् ।
परिच्छिन्नं च कर्त्तव्यं बाह्यभ्रमणकेन हि ॥१८॥
एष चारीप्रयोगस्तु कार्यो ललितसञ्चरैः ।
सूचीवामपदं दद्यात् त्रिकञ्च परिवर्तयेत् ॥१९॥
पार्श्वक्रान्तः पुनश्चाद्यो[2] वामोऽतिक्रान्त एव च ।
सूचीमाद्यं पुनर्दद्यात् अतिक्रान्तञ्च वामकम् ॥२०॥
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले ।
आद्यस्तु[3] जनितो भूत्वा स च दण्डक्रमो भवेत् ॥२१॥
[4]वामसूचीं पुनर्दद्यात् त्रिकञ्च परिवर्त्तयेत् ।
[5]उद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ॥२२॥
पार्श्वक्रान्तः पुनश्चाद्यो[5] भुजङ्गत्रासितस्तथा ।
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ॥२३॥
वामसूचीत्रिकावर्त्तो दण्डपादे मण्डले ।
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् ॥२४॥
[7]आस्पन्दितं च वामेन[8] ह्युद्वृत्तं दक्षिणेन च ।
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणम् ॥२५॥
पार्श्वक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।
[9]समावर्त्य त्रिकं चैव दण्डपादं प्रसारयेत् ॥२६॥

---

दण्डक्रम इति दण्डपादाचारी (लक्ष्यते) ॥२१॥

त्रिकावर्तादिषु अन्ते पठितत्वात् परिसमाप्तिस्थानगतामेव भ्रमरीमाश्रित्य यन्मण्डलं दण्डपादाख्यं तत्रेति संवन्धः । निकुट्टकमित्यनेन तलसञ्चरपादो लक्ष्यते ।२४। उद्वृत्तमूरूद्वृत्तादिकां चारीम् ।२५। समावर्तनं सम्यगावर्तनं सव्यापसव्यभ्रमरकद्वयेन ॥२६॥

---

१. NS. पुनश्चान्यो वामोऽतिक्रान्त एव च ।
२. KSS. NS. अन्यो ।
३. NS. तद्गतो ।
४. KSS. उद्वर्तो NS. तद्वृत्तो ।
५. KSS. अन्यो ।
६. KSS. NS. निकुट्टनम् ।
७. KSS. NS. आस्कन्दितं ।
८. KSS. उद्धत्तं NS. ह्युत्तम्भं ।
९. KSS. परिवृत्य ।

सूचीवामपदं दद्यात् त्रिकं तु परिवर्त्तयेत् ।
भुजङ्गत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ॥२७॥

एष चारीप्रयोगस्तु विहृते[1] मण्डले भवेत् ।
सूचीमाद्यक्रमं कृत्वा चाऽपक्रान्तं च वामकम् ॥२८॥

[2]पार्श्वक्रान्तस्ततश्चाद्योऽप्यलातश्चैव वामकः ।
[3][भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥२९॥

षट्संख्यं सप्तसख्यं च ललितैः पादविक्रमैः ।
अधिकुर्यादपक्रान्तमतिक्रान्तं च वामकम् ॥३०॥

अपक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ।
पादभ्रमरकश्च स्यादलाते खलु मण्डले ॥३१॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।]
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः ॥३२॥

कार्यस्त्रिकविवर्त्तश्च पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्यात् दण्डपार्श्वं[4] च दक्षिणम् ॥३३॥

ऊरूद्वृत्तं च तेनैव कर्त्तव्यं दक्षिणेन तु ।
[5]सूचीवामक्रमं कृत्वा त्रिकं च परिवर्त्तयेत् ॥३४॥

अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामो [6]वामबंधे तु मण्डले ॥३५॥

---

एताभिश्चारीभिः पर्यायेण षट्कृत्वः सप्तकृत्वो वा प्रयुक्ताभिः परिमण्डले चतुर्दिक्कं भ्रान्त्वान्तरालिकैः पादक्षेपैरिदमिदं कुर्यादिति सङ्गतिः । संख्याशब्देनाभ्यावृत्तिर्लक्ष्यते ॥३०॥

---

१. NS. विवृते ।
२. NS. पार्श्वक्रान्तं पुनश्चाद्यो ह्यलातः ।
३. इतः प्रभृति KSS. पुस्तके सार्धपद्यद्वयं नास्ति ।
४. KSS., NS. पादं ।
५. NS. सूचीवामक्रमश्चैव KSS. सूचीवामपदं ।
६. NS. कार्यो ललितसंचरः । एष पादप्रचारस्तु ललिते मण्डले भवेत् ।

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
पार्श्वक्रान्तः पुनश्चाद्यो भुजङ्ग[1]त्र[1]सितः स च ॥३६॥

[2][अतिक्रान्तः पुनर्वाम आक्षिप्तो दक्षिणस्तथा ।]
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्त[3]स्तथैव च ॥३७॥

अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ।
सूचीवामं पुनर्दद्यादपक्रान्तस्तु दक्षिणः ॥३८॥

अतिक्रान्तः पुनर्वामः कार्यो ललितसंज्ञकः ।
एष पादप्रसारस्तु ललिते मण्डले भवेत् ॥३९॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तश्च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्यं वामपार्श्वक्रमं तथा ॥४०॥

भ्रान्त्वा चारीभिरेताभि· पर्यायेणाथ मण्डलम् ।
वामसूचीं ततो दद्यादपक्रान्तं च दक्षिणम् ॥४१॥

स्वभावगमने ह्ये तन्मण्डलं संविधीयते ।
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ॥४२॥

एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु ।
अतः परं प्रवक्ष्यामि भौमानामिह[4] लक्षणम् ॥४३॥

[5]आद्यस्तु जनितः कार्यो[5] वामश्चास्पन्दितो भवेत् ।
शकटास्यः पुनस्चाद्यो वामश्चापि प्रसारितः ॥४४॥

आद्यो भ्रमरकः कार्यस्त्रिकञ्च परिवर्तयेत् ।
[6]आस्कन्दितः पुनर्वामः शकटास्यश्च दक्षिणः ॥४५॥

अतिक्रान्तस्यैव विशेषणं ललितं सञ्चरतीत्यत एव मण्डलस्येदमेव नाम ।३९।
स चेति । एवेत्यर्थः ॥५१॥

---

१. KSS. NS. त्रासितं तथा ।
२. KSS. NS. do not read.
३. KSS. NS. वृत्तं ।
४. NS. अपि ।
५. KSS. आद्यन्तु ।
६. KSS. NS. आस्कन्दितो ।
७. KSS. NS. आक्रन्दितः ।

वामः पृष्ठापसर्पी च दद्यात् भ्रमरकं तथा ।
स एवास्पन्दितः[1] कार्यस्त्वेतद् भ्रमरमण्डलम् ।।४६।।

आद्यो भ्रमरकः कार्यो वामश्चैवाड्डितो भवेत् ।
[2][कार्यस्त्रिकविवर्त्तश्च शकटास्यश्च दक्षिणः ।।४७।।

उरूद्वृत्तः स एव स्याद्वामश्चैवापसर्पितः ।
कार्यस्त्रिकविवर्त्तश्च दक्षिणः [3]स्पन्दितो भवेत् ।।४८।।

शकटास्यो भवेद्वामस्तदेवास्फोटनं भवेत् ।]
एतदास्पन्दितं नाम व्यायामे युद्धमण्डलम्[4] ।।४९।।

[5]आद्यस्तु जनितं कृत्वा वामश्चैव निकुट्टकम्[6] ।
शकटास्यः पुनश्चाद्य[7] ऊरूद्वृत्तः स एव तु ।।५०।।
[8]पृष्ठापसर्पी वामश्च स च चाषगतिर्भवेत् ।
[9]आस्पन्दितः पुनर्दक्षः शकटास्यश्च वामकः ।।५१।।

आद्यो भ्रमरकश्चैव त्रिकञ्च परिवर्तयेत् ।
[10]पृष्ठापसर्पी वामश्चेत्यावर्तं मण्डले भवेत् ।।५२।।
समपादं बुधः कृत्वा स्थानं हस्तौ प्रसारयेत् ।
निरन्तरावूर्ध्वतलावावेष्टयोद्वेष्ट्य चैव हि ।।५३।।
कटीतटे विनिक्षिप्य [11]चाद्यमावर्त्तयेत् क्रमात् ।
यथाक्रमं पुनर्वाममावर्तेन प्रसारयेत् ।।५४।।

---

आस्फोटनमिति पादतलेन भूमिताडनं युद्धेष्वास्फालनमिति प्रसिद्धम् ।।६०।।

---

१. KSS. एवास्कन्दितः ।
२. KSS. does not read these verses.
३. NS. स्कन्दितो ।
४. NS. मण्डले ।
५. KSS. आद्यन्तु ।
६. NS. वामेन तु निकुट्टनम् ।
७. KSS. चान्यः ।
८. KSS. NS. पृष्ठावसर्पी ।
९. NS. आस्कन्दितः पुनः सद्यः, KSS. आस्कन्दिनं पुनः सौख्यं ।
१०. KSS., NS. पृष्ठावसर्पी ।
११. KSS., NS. आद्यमावर्तयेत् क्रमम् ।

चारया चानया भ्रान्त्वा पर्यायेणाथ मण्डलम् ।
समोत्सरितमेत[1]त्तु कार्यं व्यायाममण्डलम् ॥५५॥
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च ।
एलकाक्रीडितैश्चैव [2]तूर्णैस्त्रिकविवर्तितैः[3] ॥५६॥
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम् ।
एलकाक्रीडितं विद्यात् खण्डमण्डलसंज्ञितम् ॥५७॥
सव्यमुद्घट्टितं[4] कृत्वा [5]तेनैवावर्तमाचरेत् ।
[6]तेनैवास्कन्दितः कार्यः शकटास्यश्च वामकः ॥५८॥
आद्यः पृष्ठापसर्पी[7] च स च चाषगतिर्भवेत् ।
[8][अड्डितश्च पुनर्वामं आद्यश्चैवापसर्पितः ॥५९॥
वामो भ्रमरकः कार्यं आद्य आस्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम् ॥६०॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टकम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ] ॥६१॥
विज्ञेयं शकटास्यन्तु व्यायामे युद्धमण्डलम् ।
पादैश्च शकटास्यस्थैः पर्यायेणाथ मण्डलम् ॥६२॥
आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः ॥६३॥

---

चशब्दोऽप्यर्थे । अतः परमपि मण्डलानि योजयेत् । कथमित्याहुः । समाः परस्परं योजनोचिताश्चार्यो यत्र तत्रोहनेऽप्युदाहरणं दर्शयति समचारीप्रयोग इति समानां भौमत्वेनाकाशीयत्वेन च चारीणां प्रयोगो यत्र । एवमनया दिशा बहूनि कल्पयेदित्याह आचार्यवुद्ध्योपलभ्यो भागः प्रयोगयोग्यो भवतीति ।६६।

---

१. GOS. NS. च ज्ञेयं ।
२. KSS. तूर्णे ।
३. NS. विवर्तनम् ।
४. KSS. उद्घटितं ।
५. NS. तेनैवावृत्तं ।
६. KSS. आस्कन्दितं कार्यं ।
७. KSS. पृष्ठावसर्पी ।
८. KSS. does not read these verses. NS. reads अङ्कित in place of अड्डित ।

भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि मण्डलम् ॥६४॥

सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तञ्च वामकम् ।
भुजङ्गत्रासित[1]श्चाद्य एवमेव तु वामकः ॥६५॥

भुजङ्गत्रासितैर्भ्रान्त्वा[2] पादैरपि च मण्डलम् ।
पिष्टकुट्टं च विज्ञेयं[3] चारीभिर्मण्डलं बुधैः ॥६६॥

सर्वैश्चाषगतैः[4] पादैः परिभ्राम्य[5] तु मण्डलम् ।
एतच्चाषगतं विद्यान्नियुद्धे चापि मण्डलम्[6] ॥६७॥

नानाचारीसमुत्थानि मण्डलानि समासतः ।
उक्तान्यतः परं चैव[7] समचारीणि योजयेत् ॥६८॥

समाचारीप्रयोगो यस्तत्समं[8] नाम मण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥६९॥

एतानि खण्डानि समण्डलानि युद्धे नियुद्धे[9] च परिक्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥७०॥

इति भरतीये नाट्यशास्त्रे मंडलविधानं नाम एकादशोऽध्यायः समाप्तः ।

---

खण्डानां प्राधान्यमपि दर्शयति खण्डानीति । वाद्येनानुगतानीति "गत्या वाद्यानुसारिण्या" (अ ४—२८२) इतिनृत्तविषयतुर्याध्यायाद्धि वैपरीत्येन नाट्ये गतौ प्राधान्यमाह इति शिवम् ॥७१॥

इति श्रीमहामाहेश्वराभिनवगुप्ताचार्यविरचितायां नाट्यवेदविवृतावभिनवभारत्यां मण्डलाध्याय एकादशः समाप्तः ।

---

१. KSS. चान्य एष एव ।
२. KSS. चारैरपि ।
३. KSS. नियुद्धे चारिमण्डलम् ।
४. KSS. चापगतैः ।
५. NS परिक्रम्य ।
६. KSS. चारिमण्डलम् ।
७. NS. समचारीं नियोजयेत् ।
८. NS. नागमण्डलम् ।
९. NS. परिचङ्क्रमे च ।

# नाट्यशास्त्रम्

## अथ द्वादशोध्यायः ।

एवं व्यायाम संयोगे कार्यं मंडलकल्पनम् ।
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ॥१॥

[1]तत्रोपवहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ।
यथामार्गरसोपेतं प्रकृतीनां प्रवेशने[2] ॥२॥

---

## अभिनवभारती

श्रुत्यन्तविश्रान्तविधिर्या गतिः परमात्मनः ।
तां महानन्दसन्दोहतत्त्वमूर्तिं स्तुमः सदा ॥

प्रकरणसंगतये प्रकृतानुपूर्वकं निरूपयिष्यमाणं प्रतिजानीते एवमिति । व्यायामानामन्योन्यसंमीलनयोग्यानां चारीणां संहृत्या योगे मिश्रीभावे सति मण्डलानां कल्पनमनुक्तमपि कर्तुं शक्यं बुद्ध्येति तत उपरम्यते । तत्राङ्गिकस्य रसभावयो-र्विभागशो विनियोगस्य कृतत्वाद्यद्यपि क्वचित् तन्मिश्रणेऽपि पृथग्विनियोगो न वक्तव्यः तथापि शिष्यहितप्रतिपन्नो मुनिर्दिशं दर्शयितुं शिरः प्रभृतिपदान्तं (यानि) अङ्गसंधेयानि कर्माण्युक्तानि तत्मेलनबलेन यो देहसंनिवेशो गतावेव न स्थितो प्रकाराभावात्तस्य विनियोगं प्रकटयिष्यन् चारीमण्डलप्रसंगस्याचित्तवृत्तित्वाद्-गतिविनियोगमेव प्रतिजानीते । गतिश्च प्रकृतिं रसमवस्थां देशं कालं चापेक्ष्य वक्तव्या प्रतिपुरुषमभिधानात् । तत्र प्रक्रिया पूर्वमुच्यते, तदेतत्तुशब्देन यावच्छब्दपर्यायवाचिना क्रमार्थेन काकाक्षिवदुभयतो धावता द्योतितम् ॥१॥

तत्राप्रविष्टस्य का गतिरिति प्रयोगोपक्रमं सूचयति तत्रोपवहनमिति । यद्रङ्गानु-सारालाप इति प्रसिद्धं तमालापं कृत्वा ध्रुवायां सम्यक् प्रवृत्तायां, कथं ? भाण्डवाद्य-पुरस्कृतत्वादिरूपत्रययुक्तं कृत्वेति, त्रीण्यपि क्रियाविशेषणानि । तन्त्रीभाण्डं वाद्य-मानं पुष्करवाद्यम् । मार्गो देशः, रसः स्थायिचित्तवृत्तिः । वीप्सायामव्ययीभावः यो

---

१. NS. तत्रोपवाहनं ।

२. KSS. प्रवेशनम् ।

ध्रुवायां [1]संप्रयुक्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः ॥३॥

स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ।
सम्मुन्नतं समं चैव चतुरस्रमुरस्तथा ॥४॥

बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
[2]ग्रीवाप्रदेशः कर्तव्यो [3]मयूराञ्चितमस्तकः ॥५॥

---

यः कश्चिद्गृहोद्याननिर्देशः रत्यादिश्चित्तवृत्तिविशेषः तेनोपेतं कृत्वा, या ध्रुवा तथा उत्तमादिप्रकृतीनां यस्यावेशनं बुद्धौ प्रवेशो यत्र तथा कृत्वा । एतदुक्तं भवति—हंसाद्युपमानमुखेन प्रकृतिविशेषः, चित्तवृत्तिविशेषः, उद्यानादिविशेषश्चावश्यं ध्रुवासूपनिबन्धनीयः ॥२॥

एवं ध्रुवायां प्रवृत्तायामेवं सत्यां । पटेऽपकर्षिते यवनिकायामपसारितायां तदा सामाजिकानां नेपथ्यगृहादयमागत इति नटी निवर्त्यते । चकारात्तत्काले पुनरुपोहनम् । ध्रुवाप्रवेशो लये मध्ये वलितया (वलितयेति कोहलेन प्रयोगवलनाद्युपदिष्टम्) शुष्काक्षरगानं कृत्वा, प्रवेश एव तथा समुचितस्थानकदृष्टिमुखरागादिभियुक्तः कर्तव्यो यथा सामाजिकानां झटित्येवान्विताभिधाननयेन मुख्यरसव्याप्तिरुदयते । प्रगीतं गीयमानग्रामरागाग्रगतैकगमकाकर्णने समग्रग्रामतत्त्वसंवेदनवशः ।

अन्ये तु नानार्थरस सम्भव इत्यत्र यथामार्गकलोपेतमिति पठन्ति । उभयतः शेषत्वेन व्याचक्षते—मार्गेषु चित्रादिषु याः कला द्विमात्राचतुर्मात्राष्टमात्रेति ग्रामेषु उच्यन्ते चालिप्तकादिषु कलावाद्याक्षराणीति । यद्यपि पात्राणामध्रुवा अपि प्रवेशा वक्ष्यन्ते तथापि संभवमात्राभिधानमेतदुत्तममध्यमयोर्वा प्रस्तावादेवमुक्तम् तयोर्हि ता ध्रुवाः प्रवेशास्तेऽपि वा चकारेण संगृहीता एव ॥३॥

स्थानमिति त्र्यश्रेऽर्धद्विकतालभागिति वैष्णवं सममन्यत् समुन्नतम् ।४। स्वप्नप्रवेश एव सन्ने अचले प्रसन्ने, नात्युत्क्षिप्ते अधो वा उपरि वा । अधोगामित्वं यत्नेन परिहार्यमिति श्लोकार्थमेव शिक्षयितुं स्फुटमुपायमाह ग्रीवाप्रदेश इत्यादिना सार्धेन श्लोकद्वयेन । स्वस्थमयूरवदञ्चितं सुरूपं शिरो यत्र ।५। नाभिसंस्थ इति

---

१. KSS. GOS. संप्रवृत्तायां परे चैवापकर्षिता ।
२. NS. ग्रीवाप्रवेशः ।
३. NS. मयूराञ्चित ।

कर्णादष्टाङ्गुलस्थे च वाहुशीर्षे प्रयोजयेत् ।
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ॥६॥

हस्तौ तथैव कर्तव्यौ कटीनाभितटस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वामः कटितटस्थितः ॥७॥

पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
[2]पादोत्क्षेपस्तु कर्त्तव्यः स्वप्रमाणविनिर्मितः ॥८॥

चतुस्तालो द्वितालश्[3]वाप्येकतालस्तथैव च ।
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ॥९॥

[4]द्वितालश्चैव मध्यानां तालः स्त्रीनीचलिङ्गिनाम्[5] ।
[चतुष्कलोऽथ द्विकलस्तथा ह्येककलः स्मृतः] ॥१०॥

---

चातुरश्रप्रस्तावः खटकामुखः, वाम इत्यर्धचन्द्रः ।६-७। न चेदमुपविष्टस्थानकमपि तु गत्यानन्तर्यौचित्यात्तु स्थितस्थानकमेवेति दर्शयितुमाह—पादयोरन्तरमिति । "द्वौ तालावर्धतालश्च पादयोरन्तरं भवेदिति (१०-५२) । यत्स्थानकलक्षणं सूचितं तदेव कार्यं नान्यदुपवेशनादित्यर्थः । तत्र स्थानकानन्तरं गतिमुपक्षिपति पादोत्क्षेप इति स युक्तस्तेन भाविलक्षणेन देशकाल परिच्छेदेन च कर्तव्यः । स्वकरमानेन च तालः पात्रस्येत्यर्थः ॥८॥

तत्र देशपरिच्छेदं तावदाह एकताल इति तालः प्रसारितमध्यमा ? (तर्जन्य)ङ्गुष्ठान्तरं "तालः स्मृतो मध्यमया ?" इति । संख्याक्रमेणाभिधाय स्थायिस्थानभूतोत्तमप्रकृतिविश्रान्तत्वात् प्रयोगजातस्य तदुपक्रमं विनियोगमाह चतुस्तालस्त्विति । तुशब्दोऽप्यर्थे कदाचिदन्यथापि भावात् । तथाशब्दो राज्ञां देवसदृशगत्यसंभवसंभावनापसारणद्योतकः ॥९॥

---

१. NS. दृष्टा ।
२. NS. पादक्षेपस्तु ।
३. KSS. omits अपि ।
४. KSS. द्वितानेध्र्यश्चैव मध्यानां तालस्वी च ।
५. NS. सङ्गिनाम् ।

